जीयाद्विज्ञानधर्मोन्नयनमनुसरन्नौद्धवः सम्प्रदायः

जीयात्सत्सङ्ग एष प्रभूतहितगतिः श्रीमदाचार्यपादैः ।



अस्मान् शिष्यान् समस्तान्निजनिजनियमे स्थापयन्तः समृद्धिम्

प्राप्यानन्दप्रसादाभिधगुरुचरणाः पूर्णमायुर्जयन्तु ॥ १ ॥

સ્વસ્થાન શ્રી વડતાલની ગાદીના સ. ધ. ધુ. આચાર્ય શ્રી ૧૦૮ આનન્દપ્રસાદજી મહારાજ.।



जयतु भगवान् श्रीस्वामिनारायणः ।

# भूमिका

अनुरक्तिः परा काचिदरविन्दविलोचने ॥
अस्तु मे नामृतं यस्मात्परं किमपि वर्त्तते ॥ १ ॥

विदितमेतत्-विविधानि दर्शनानि निःश्रेयसपथमुपदिशद्भिर्महर्षिभिः प्रणीतानीति ।

तत्र प्रकृतिपुरुषविवेचनमात्रेण तापत्रयं प्रशमयन्तः कतिचन-दर्शनमात्मनः श्रेयःपथे परिपूर्णं साधनं मन्यमाना उपरमन्ते ।

अपरे च-तद्विवेचनमात्रेण तापत्रयोपशमं दुष्प्रापं विचार्य योगानुशासनमवलम्बन्ते, ते च यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिलक्षणादष्टाङ्गयोगात्तापत्रयोपशमं पश्यन्तः, योगसाधनपर्वसु ईश्वरप्रणिधानमन्तर्भावयन्त ईश्वरे लेशतः प्रेम प्रदर्शयन्तीव ।

अपरे तु-वेदप्रामाण्यं विशेषतः समर्थयन्तः चोदनास्वेव दत्तदृष्टयः कर्मभिरेव श्रेयः पश्यन्तो महता सरम्भेण कर्मवादान् विचारयन्तो गतागतैकलक्षणभवपथपरिभ्रमणतो नेतरदमृतं पश्यन्ति।

अपरे पुनः-पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगममवधारयन्तः पदार्थतत्त्वनिरूपणाय प्रवृत्ता आत्मपरमात्मनोः स्वरूपस्वभावौ यथास्वदर्शनं निरूपयन्तोऽपि, अपवर्गतत्साधननिरूपणे विशेषतो दृष्टिमविदधतः परमाणुपारिमाण्डल्यादिस्वरूपं विशेषतो विचारयन्तो, निचारयन्तश्च महता ग्रन्थसन्दर्भेणानुमानप्रमाणं कृतकृत्यानात्मनो मन्यन्ते ।

भगवान् बादरायणस्तु अवधूयासारमखिलम्, सारतमं निःश्रेयसैकान्तमौपनिषदं पन्थानं प्रकटयन् " येनाक्षरं पुरुषं वेद सत्यम् "

इत्येतदौपनिषदं विज्ञानं ब्रह्मविद्यालक्षणमौपनिषदार्थविचारमुखेन प्रावर्तयत । सेयं शारीरकमीमांसा परब्रह्मविचारलक्षणा प्राधान्येन तत्स्वरूपतदुपासननिरूपणं प्रवर्तते । प्रथमं ब्रह्मस्वरूपं निरूपयन्ती पारमैश्वर्यमसाधारणमवगमयति परस्य ब्रह्मणः । जिज्ञासितस्य परस्य ब्रह्मणः स्वरूपं हि जगदभिन्ननिमित्तोपादानत्वेनासाधारणधर्मेण लक्ष्यते । तच्च विचित्रशक्तियोगमैश्वर्यं च ज्ञापयति । तस्यास्य प्राप्तौ साधनमुपासनं विद्याभेदनिरूपणमुखेन निरूप्यमाणं प्रेमगर्भमेव । उपासनं स्यात् ध्रुवानुस्मृतिः, ध्रुवानुस्मृतिश्च प्रेमगर्भैव सिद्ध्येत् । प्रिय एव ह्युपास्यते । ध्रुवानुस्मृतिरेव च ध्यानम् । तदेव प्रेमगर्भतया भक्तिरित्यभिधानमर्हति । तदेवमपवर्गसाधनतया विद्याभेदान्निरूपयन्ती शारीरकमीमांसा भक्तियोगं परमेश्वरविषयकप्रीतिरूपापन्नोपासनलक्षणं प्रतिपादयति । ननु— दर्शनान्तरेभ्य औपनिषददर्शनस्यास्य भक्तावादरो व्यक्तं विज्ञायते नाम । अमृतरसवत् स्वतः स्वादुतमोऽप्येष परमेश्वरे परानुरागः परमप्रेमलक्षण औपनिषदेषु उपासनाभेदेषु अधिकारिविशेषकालविशेषदेशविशेषेतिकर्तव्यताविशेषादिनियतिविशेषसापेक्षेषु अन्तर्निगूढस्वरूपः प्रतिरुद्धस्वरसगतिः, भक्तिपर्वपारम्यं नाधिगच्छति । तदेवं बादरायणमौपनिषदं दर्शनं परब्रह्मविचारलक्षणमन्तर्निगूढप्रेमरसपरविद्यानिरूपणपरम् ।

महर्षिः शाण्डिल्यस्तु — परमेश्वरविषयकपरमप्रेमलक्षणां भक्तिमनपेतसाधनफलभावां प्राधान्येन निरूपयन् भक्तिमीमांसालक्षणं शास्त्रम्-"अथातो भक्तिजिज्ञासा" इत्यादिना व्यरचयत् । तदिदं शास्त्रं भक्तिस्वरूपं यथावज्जिज्ञासमानैरादरणीयं नाम विशेषत इतरेभ्यः

हन्त ! श्लाघेति चेत् ब्रूयात् तं प्रति ब्रूमहे वयम् ।
प्रस्तावनाप्रवृत्तानामर्थवादोऽपि शोभते ॥

अथ विचारयामः-कस्य ? वा न मतमीश्वरे भक्तिः श्रेयसे इति । ईश्वर इत्थम्भूतः, श्रेयश्चेदमित्थम् , इत्यत्र तु मिथो वैमत्यम् । कापिला निरीश्वरजगद्वादिनोऽपि कापिले भगवति महामुनौ धर्मज्ञानैश्वर्यसम्पन्ने भक्तिः श्रेयसे इति मन्यन्ते । आदिविद्वान् सिद्धोऽय-

मित्यैश्वर्यं तस्मिन्नित्यपि च मन्यन्ते नाम ते। श्रेयश्च ज्ञानाद्युत्कर्षसिद्धिरिति। परस्य दृष्ट्या तु तदुभयं सातिशयम्।

एवमेव निरीश्वरवादिनोऽन्येऽपि।

एवं पातञ्जलाः—क्लेशकर्मविपाकाशयैरपरामृष्टमेकं नित्यमीश्वरम् मन्यन्ते, तस्मिन् भक्त्या श्रेयः, योगाङ्गनिष्पत्तिः, समाधिलाभो वेति च।

निर्विशेषचिन्मात्रब्रह्मवादिनोऽपि मायाशबलितं सगुणं ब्रह्म परमेश्वरम्, तदुपासनाच्च परमप्रेमरूपात् कार्यब्रह्मलोकप्राप्तिमपुनरावृत्तिलक्षणां श्रेयो मन्यन्ते।

आक्षपादा अपि परमात्मानं सर्वज्ञं सर्वशक्तं सर्गादेः कर्तारं परमेश्वरम्, तद्ध्यानपर्यन्ताया भक्तेः मिथ्याज्ञाननिवर्तकात्मसाक्षात्कारसम्पत्तिलक्षणे श्रेयसि द्वारतां च मन्यन्ते। आह च न्यायाचार्यः—

"न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपासनैव क्रियते श्रवणानन्तरागता॥
आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्"इति॥

ध्यानाभ्यासस्य रसता च परमप्रेमरूपतया। प्रज्ञाम्—परमात्मनः, प्रकरणं हि परमेश्वरस्य। योगमुत्तमम्—आत्मसाक्षात्कारलक्षणम्। तत् भक्तिं प्राधान्येन निरूपयत् शास्त्रं कस्य? नोपसेव्यम्।

"तमेवं विद्वानमृत इह भवति"। "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"। "ब्रह्म वेद ब्रह्मैव भवति"। इत्यादिकतिपयोपनिषद्वाक्यश्रवणमात्रेणात्मानं ब्रह्मदर्शिनं मन्यमानाः—"भक्तिरित्यनात्मविदामादरणीयः पन्था"इति प्रवदन्तो, निरूपयन्तश्च भजधात्वर्थस्वारस्यं "सेव्यसेवकभावाध्यवसायनिबन्धनो भक्तिपथः—"स स्वराड् भवति" इति स्वाराज्यस्य मुक्तिस्वरूपस्य प्रतिपन्थी राजभृत्यसरणिमात्रविद्भिरेवादरणीय" इति वदन्ति।

अवजानन्तु नाम ते। न हि ततः कोऽप्यपकर्षो भक्तेः। ब्रह्मदर्शिनोऽपि भक्तिरसमेवास्वादयन्ति। तथा च विष्णुपुराणे—

"न शब्दगोचरं यस्य योगिध्येयं परं पदम्।
यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः॥
विस्तारः सर्वभूतस्य विष्णोः सर्वमिदं जगत्।
द्रष्टव्यमात्मवत्सर्वमभेदेन विचक्षणैः॥
ॐ नमो विष्णवे तस्मै नमस्तस्मै पुनः पुनः।
यत्र सर्वं यतः सर्वं यः सर्वं सर्वसंश्रयः॥
सर्वगत्त्वादनन्तस्य स एवाहमवस्थितः।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने॥
अहमेवाक्षयो नित्यः परमात्मात्मसंश्रयः।
ब्रह्मसंज्ञोऽहमेवाग्रे तथान्ते च परः पुमान्॥
ॐ नमः परमार्थाय स्थूलसूक्ष्म! क्षराक्षर!।
व्यक्ताव्यक्त! कलातीत! सकलेश! निरञ्जन!॥
गुणाञ्जन! गुणाधार! निर्गुणात्मन्! गुणस्थित!।
मूर्तामूर्त! महामूर्ते! सूक्ष्ममूर्ते! स्फुटास्फुट!॥
नित्यानित्यप्रपञ्चात्मन्! निष्प्रपञ्चामलाश्रित!।
एकानेक! नमस्तुभ्यं वासुदेवादिकारण!॥
यः स्थूलसूक्ष्मः प्रकटः प्रकाशः यः सर्वभूतो न च सर्वभूतः।
विश्वं यतश्चैतदविश्वहेतो! नमोऽस्तु तस्मै पुरुषोत्तमाय॥
नाथ! योनिसहस्रेषु येषु येषु व्रजाम्यहम्।
तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु"॥ इति॥

विज्ञायते चैतैर्वचनैरात्मदर्शिनामग्रेसरस्य प्रह्लादस्य परब्रह्मनिष्ठा भक्तिरससुसंस्कृतेति।

सेवा च गौरवितप्रीतिपरिपाकलक्षणेति न धात्वर्थस्वारस्यभङ्गः।

कतिचन पुनः—कलत्रपुत्रादिसम्पदि समासक्तचित्ताः जातु श्रवणकीर्तनादि भगवतः कुर्वन्तो भक्ताः ख्यायन्ते, कतिपयवेदान्तवाक्यपठनमात्रेण ये ज्ञानिनः ख्यायन्ते, तानपेक्ष्यैते भक्ता नाम। गौण्या भक्त्या तथा प्रवादः।

ज्ञानादपि हि भक्तिर्गरीयसी। श्रवणमननादिना तत्तु साध्यम्। परमेश्वरे परमप्रेमलक्षणा भक्तिस्तु न प्रयत्नशतेनापि साध्या, न ह्यर्हति प्रेम विधेयताम्। परानुरागो विषयेषु स्वरसतो दृष्टो लोके, सोऽयं परानुरागः परमेश्वरे कस्यचिदेव–नैकजन्मसम्पादितसमुचितकर्मसाश्रितपुण्यविशेषस्य भाग्यवशादेव समुद्भवति। भागवतोत्तमपरमहंससेवासत्सङ्गमजनितपरमेश्वरानुग्रहाद्वा। यस्मिन्ननुरागे समुद्भूते नान्यत् किञ्चन पश्यति, नान्यद्रसयते। निलीयते च यस्मिन् रसमये परमात्मनि, सा हि भक्तिः। इदमेवाभिप्रेत्य–"सा परानुरक्तिरीश्वरे" इति सूत्रकारः प्राह।

पातञ्जलाः—ईश्वरप्रणिधानादचिरात्समाधिलाभमाचक्षते। विकल्पयन्ति चेश्वरप्रणिधानम्–" तीव्रसंवेगानामासन्नः, ईश्वरप्रणिधानाद्वे"ति। प्रणिधानसमये भावितोऽपीश्वरः समाधावपसर्पति नामैषां चेतःपथात्। आत्मकैवल्यमेव ह्येषामभिलषितम्। समाधिस्वरूपं च चित्तवृत्तेः सर्वात्मनोपरमलक्षणम्। या पुनरध्यात्मप्रसादात् ऋतम्भरा प्रज्ञा अन्ते समुत्पन्ना, तज्जसंस्कारेण तदितरसंस्कारोपरोधे सति तस्यापि संस्कारस्य अन्ते निरोधात्। सर्वोपरोधात् चित्तं व्युत्थातुमसमर्थं सत् स्वयं प्रणश्यति। ततश्च आत्मा केवलश्चिद्घनः प्रकाशते इति फलस्थितिरेषाम्।

तथा च सूत्रम्–"ऋतम्भरा तत्र प्रज्ञा"। "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी"। "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः"। इति।

कर्कशं चैषामीश्वरप्रणिधानम्, यत् — परमेश्वरपरमप्रेमविधुरं हि तत्, विकल्प्यते हि तीव्रवैराग्येण तत्, वैराग्यं च दोषानुचिन्तनात्, तापत्रयाभिघातो दोषस्त्वनुचिन्त्यते, स्यात्तेन वैराग्यम्, न चैषां परमं फलं तदपनोदनादन्यत्, तदेषां परमेश्वरे परानुरागलक्षणस्य प्रेमातिरेकस्य कः प्रसङ्गः?। फलपर्वण्यानन्दमयमपश्यतां केवलमात्मानं नित्योदितप्रकाशैकरसं पश्यतां एकब्रह्मवादिनां वा कुतस्तस्मिन् प्रेमातिरेकः?। जातु तस्मिन् स जायमानोऽपि ज्ञाननिष्पत्तेः प्रागेव तेषां तस्यावसरः। अत एव भक्तिर्ज्ञानसिद्धावुपकारिका केवलमिति तेषां वादः।

ये पुनरानन्दमयं परमात्मानं विज्ञानमयाज्जीवात्मनोऽन्यमनन्याश्रयमखिलाश्रयमखिलकारणमनन्तकल्याणगुणपरिपूर्णं मुक्तप्राप्यमिच्छन्ति, तेषां तु परमात्मनि परानुरागलक्षणा भक्तिः साधनदशायां साध्यदशायां चानुवर्त्तमाना निरतिशयतां प्राप्नोति।

अस्यापि महर्षेः शाण्डिल्यस्येदमेवाभिमतम्। भगवतश्चेदमेव हार्दम्। गीयते हि भक्तेरेव परमनिःश्रेयससाधनत्वं भगवता स्वयमेव गीतायाम्–

" मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते " ॥

" यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत! " ॥

" सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते " ॥

" मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः " ॥

" भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप! " ॥

" मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः " ॥

" तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम् " ॥

" मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः " इति ॥

प्रपञ्चस्तु सूत्र–भाष्य–टीकासु तत्र तत्रान्तः प्रविशतां सुगमः। नात्र वयं पृथग्यतामहे। इदं च सूत्रं ब्रह्मसूत्रतः पश्चात्तनमिति विज्ञायते। अनूद्यते हि बादरायणमतमिह–" आत्मैकपरां बादरायण " इति। अयं च महर्षिः ज्ञेयमात्रास्यानृतत्ववादं कण्ठरवेण निरस्यति–" शक्तित्वान्नानृतं वेद्यम् " इति। ज्ञातृज्ञेययोः सत्यत्वं प्रतिपादयंस्ताभ्यामतिरिक्तं प्रतिषेधति–" चेत्याचितोर्न तृतीयम् " इति। परस्य ब्रह्मण ऐश्वर्यं सर्वज्ञत्वसर्वशक्तत्वसर्वकारणत्वादिलक्षणं स्वाभाविकमित्याह–" ऐश्वर्यं तथेति चेन्न स्वाभाव्यात् "। " अप्रतिषिद्धं परैश्वर्यं तद्भावाच्च नेतरेषाम् " इति।

एतेन–उत्तीर्णपारमैश्वर्यं निर्विशेषं परम्ब्रह्मेति वादः परास्तः। परस्य ब्रह्मणो जगदुपादानत्वेऽप्यविकारित्वमाह–" प्रकृत्यन्तरलादवैकार्यं चित्सत्त्वेनानुवर्तमानात् " इति।

अयं महर्षिः शाण्डिल्यः कः ? इति विमृशन्तः कतिचन— छान्दोग्ये तृतीयाध्याये चतुर्दशे खण्डे–" इति ह स्माह शाण्डिल्यः शाण्डिल्यः" इति ब्रह्मविद्याप्रवर्तकतया श्रूयमाणं शाण्डिल्यं स्मरन्ति। लिङ्गं चात्रेदमामनन्ति–भक्तिशास्त्रेऽस्मिन्—"तामैश्वर्यपरां काश्यपः" " आत्मैकपरां बादरायणः " । " उभयपरां शाण्डिल्यः " इत्येतैः सूत्रैः परमतोपन्यासपूर्वकं ब्रह्मविद्यायाः पारमैश्वर्यान्तरात्मत्वोभयविषयतामेव स्वाभिमतां प्रदर्शयति। उपनिषदि श्रूयमाणायां शाण्डिल्यविद्यायां ब्रह्मविद्याया उभयपरता व्यक्तं श्रूयते— " मनोमयः प्राणशरीरनेता भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः, एष मे आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा, एष मे आत्मा अन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः " इति। पूर्ववाक्ये परमेश्वरासाधारणधर्मो मनोमयत्वादिः, उत्तरवाक्ये अन्तरात्मता, उभयावलम्बिता हि ब्रह्मविद्याया गम्यते। तदिदमुभयपरताश्रयणं संज्ञैक्यं च स एवायमिति प्रत्यभिज्ञापयतीति।

वयं तु ब्रूमः — विद्यान्तरसाधारण्यादीदृशनिर्देशस्य पुरुषभेदेऽपि संज्ञासाम्यात् स एवायमिति प्रत्यभिज्ञानं दुःशकम्। अपरश्च महर्षिः शाण्डिल्यः पाञ्चरात्रप्रवर्तकः ख्यायते नाम। इहापि पाञ्चरात्रप्रसिद्धबाह्ययागानुबन्धि " तद्याजिः पूजायामितरेषां नैवम्" "पादोदकं तु पाद्यमव्याप्तेः" " स्वयमर्पितं ग्राह्यमविशेषात् " इति निरूप्यते। तदयं पाञ्चरात्रप्रवर्तकः शाण्डिल्य इति। नारद इवायं पाञ्चरात्रप्रवर्तको भक्तिसूत्रप्रणेतापि उपनिषदि श्रूयमाणादनन्योऽपि स्यान्नाम। श्रूयते च—" अधीहि भगव इति होपससाद सनत्कुमारं नारद " इति। ख्यायते च नारदपाञ्चरात्रमिति, भक्तिसूत्रं चापरं नारदविरचितमिति भक्तिशास्त्रप्रवर्तकौ नारदशाण्डिल्यौ नार्वाचीनौ। अपि तु पुरातनौ महर्षी इत्यत्र तु न विवादः।

भाष्यं चास्य भक्तिसूत्रस्य मद्गुरुवर्य श्रीनित्यानन्दमुनिप्रणीतमिदं सकलबुधजनाह्लादकं सूत्रार्थप्रकाशकं सरल्या शैल्या सम्पन्नं भक्तितत्त्वं जिज्ञासमानैः समुपसेव्यं समेधते।

टीका चेयं तच्चरणकमलसेवारसिकेन श्री कृष्णजीवनदासमुनिना पण्डितप्रवरेण विरचिता गम्भीरभाष्यार्थविवेचनायात्यन्तमुपयुक्ता, यया भाष्यं समलङ्कृतं सुमनसां परीक्षकाणामाह्लादमावहति।

सटीकस्यास्य भाष्यस्य संशोधने प्रवृत्ता वयमस्य सूत्रस्य व्याख्यानानि प्राचीनान्यद्राक्ष्म।

तेषु स्वप्नेश्वराचार्यविरचितं प्राचीनं भेदाभेदवादम्, औपाधिकजीवभेदवादं च सूत्रकाराभिप्रेतमवगमयति।

अपरं च ततोऽर्वाचीनं श्रीमद्वल्लभाचार्यमतानुसारि स्वरूपपरिणामवादलक्षणं शुद्धाद्वैतवादं गमयति।

ततोऽप्यर्वाचीनं श्रीनिवासाचार्यविरचितं श्रीमद्रामानुजसम्प्रदायानुसारि विशिष्टाद्वैतसिद्धान्तमवलम्ब्य प्रवर्तते। इदं चास्माभिर्मद्रनगरस्थराजकीयसंस्कृतपुस्तकालयतः सम्पादितं लिखितपत्रात्मकम्।

इदं तु—श्रीनित्यानन्दमुनिप्रणीतं श्रीमदौद्धवसम्प्रदायानुसारि विशिष्टाद्वैतमेवावलम्ब्य प्रवर्तते। अस्मिन् भाष्ये टीकायां च तत्र तत्र परव्याख्यानानि परीक्ष्यन्ते। निरसनीयांशाश्च निरस्यन्ते। अस्माभिर्भाष्ये टीकायां चावहितां दृष्टिमावहद्भिः, अपनयनेन प्रामादिकानां दोषाणाम्, संस्करणेन चापेक्षितांशानाम्, सुमनसां समाह्लादाय भूयान् यत्न आहितो नाम।

ये नाम—सनातनधर्मधुरन्धराः श्री-१०८ आनन्दप्रसादजिमहाराजाः ईदृशे संशोधनकर्मणि सकलसुमनःसमाह्लादके, अस्मान्नियोज्य वैदुष्यमस्माकं प्रकाशयन्ति, तानेतान् सुप्रतिष्ठितान् पूर्णेनायुषा धर्मेण कीर्त्या च सुसमृद्धान् श्रीलक्ष्मीनारायणचरणकमलयोः सन्निधावनुदिनं स्मरामः॥

आशास्महे सुमनसामाह्लादं भाष्यटीकयोः।
इतोऽधिकं किमन्यत्स्यादाशास्यं विदुषां भवि॥



जयतु भगवान् श्रीस्वामिनारायणः।

सद्गुरुवर्याय श्रीनित्यानन्दमुनीन्द्राय नमः।

# भाष्यकारस्य श्रीमतो नित्यानन्दमुनेः चरितम्-

यद्वाचः सर्वशास्त्राम्बुधिमथनसमुद्भूततत्त्वामृतैक-
व्याख्यानिष्ठागरिष्ठाः प्रतिकथककथोत्खातलीला जयन्ति।
यस्यानन्दाय नान्यत् प्रभवति सहजानन्ददिव्यस्वरूपात्-
नित्यानन्दो मुनीन्द्रः स जयति हृदयध्वान्तविध्वंसितेजाः॥१॥
अथैतद्भाष्यकारस्य चरितं यदनूद्यते।
औद्धवे सम्प्रदायेऽस्मिन्निबद्धं तच्चिरन्तनैः॥ २॥
भाषानिबन्धपुष्पादाचूष्यैतच्चरित्रमकरन्दम्।
संस्कृतमधुपटलेऽस्मिन्निहितं गृह्णीत मधुकृतानेन॥ ३॥

अस्ति नामास्मिन्भारते मण्डले मध्यविभागे लखनौ इति ख्याता नगरी। अस्ति च तस्याः प्रान्ते दतीया इति ख्यायमानः कोऽपि ग्रामः। तत्र विप्रकुलालङ्कारभूतावास्तां दम्पती, यौ निदर्शनं लोकानां धर्माचरणे। तत्र जाया नाम्नेवार्थतोऽपि विरजादेवी आसीत्।

सा हि सत्त्वप्रकृतिः, न रजसा यस्या मानसमभिभूतम्, पतिश्च विष्णुशर्मा विष्णुपरायणः। योऽसौ विद्याधनाभिजनजन्मभिर्महत्तरः सर्वैर्माननीयः समभूत्। अस्यायं गृहस्थाश्रमः पत्न्या धर्माचरणैकप्रियया अग्निपरिचर्यापरायणया समशोभत। नैकोऽप्यतिथिरभ्यागतो वानेनासत्कृत आसीत्। नैकोऽप्यर्थी भग्नाशोऽस्य गृहात्प्रत्यावर्तत।

तदेवं धर्मपरायणयोरनयोः सुकृतपरिपाकेन द्वौ पुत्रावभूताम्, तत्रैको गोविन्दशर्मा अपरश्च दिनमणिशर्मा ताभ्यामेताभ्यां पुत्र-

रत्नाभ्यां सोऽयं विष्णुशर्मा पुत्रिणामग्रणीर्बभूव। तयोः पुत्रयोर्दिनमणिशर्मा बालभावेऽपि मेधया सर्वातिशायिन्या, गुणेन शमदमादिना, वृत्तेन सज्जनैकान्तेन, गम्भीरया चाकृत्या वृद्धादीनामपि समुपसेव्यः समभूत्। अथाष्टवर्षोऽयमुपनीतः पित्रा प्राप्तसावित्रिकः सपदि विमुखो बाल्योचितेषु विहरणेषु विज्ञानपथैकप्रवणहृदयो विद्वज्जनसमागमैकसमुत्सुकः प्राप वाराणसीम्। तत्र वेदं वेदाङ्गानि चाधीत्य गुरोर्विमृशन्स्वयं शास्त्राशयं "नास्त्यकृतः कृतेने"ति निर्विण्णः तत्त्वज्ञानविधुरस्य शास्त्रजालविज्ञानस्य श्रमैकफलतामवधृत्य, समीक्ष्य विषयदोषं विचार्य गृहक्षेत्रादेर्बन्धकतां दवानलादिव भवाद्भीतिभीतः परित्यज्य सवासनं बन्धुजनम्, परमात्मानं परमानन्दमयं मुक्तजनसमुपसेव्यममृतमभयं पुरुषोत्तमं साक्षात्प्राप्तुकामः साधुजनसमागमं तत्प्राप्तावुपायं विनिश्चित्य पुण्यतीर्थेषु तं लाभं सुगमं मत्वा प्रथमं बदरिकाश्रमं प्रति प्रतस्थे। तीर्थयात्राटनसमुत्सुकानेकजनभूयिष्ठेन सङ्घेन सहैकीभूय तत्र तत्र तीर्थक्षेत्रादौ व्रजन्, तत्र तत्र स्नानदर्शनादिकं कुर्वन्नात्मनो मनीषितमात्मन्येव विचिन्तयन् असङ्ग एवायं व्यचरत्।

तीर्थाटनव्रतपराणामन्येषां सर्वेषामेव तत्र तत्र तीर्थक्षेत्रादौ मनसः परा तुष्टिरुदभूत्। अस्य तु मुमुक्षोर्दिनमणिशर्मणः परमपुरुषसाक्षात्कारैकसमुत्सुकस्य तत्साक्षात्कारापादकसाधुपुरुषान्वेषणैकप्रवृत्तस्य स्वसमीहितालाभेन निर्वेद एव समवर्धत। परमनुदिनमनुक्षणं तमेव सच्चिदानन्दमयं परमपुरुषं कदाहं साक्षात्करिष्यामीति तीव्रभावनया समनुध्यायतः स भगवान् सन्निहित इव समालक्ष्यत मनःप्रसादादिभिर्लिङ्गैः।

अथ जगन्नाथपुरीप्रभृतिदिव्यक्षेत्राणि सेतुबन्धप्रभृतितीर्थजातं चानुप्राप्य, अप्राप्य तत्राप्यात्मनो मनोरथम्, द्वारिकाक्षेत्रं जिगमिषुः प्रस्थितो मार्गवशाद्वीशनगराख्यं ग्रामं प्राप। तत्र कर्णाकर्णिकया प्रसृतमत्यद्भुतं वृत्तमिदमश्रृणोत्–स खलु भगवान् सर्वेश्वरेश्वरः कारणं सर्वलोकस्य सकललोकसर्गस्थितिप्रणाशहेतुरक्षरात्परतः परः परमपुरुषः कलिबलसमुद्भूतमधर्मबलमासुरबलं च प्रशमयन् स्वयं

प्रादुर्भूय धरातलेऽधुना सौराष्ट्रदेशे सहस्राधिकैः परमहंसैः परिवृतो भक्तजनानानन्दयन् सञ्चरति। तच्चरणकमलसमाश्रयाश्च साधवः सदुपदेशामृतैः सर्वेषां श्रोतृणां तापत्रयं सद्यः प्रशमयन्ति। कलावपि कृतयुगं प्रवर्तते। स हि भगवान् कालस्यापि प्रवर्तकः, तस्मिन् साक्षादवतीर्णे किन्नाम श्रेयो न सिद्ध्येदिति। तदिदमुपश्रुत्य प्रहृष्टहृदयः सोऽयं दिनमणिशर्मा तमेव साक्षात्कर्तुकामः "सिद्धो मे मनोरथ" इत्याश्वस्तहृदयः सपदि ततः प्रतस्थे। स ततः प्रस्थितः पुरात्पुरं ग्रामाद्ग्रामं त्वरया व्रजंस्तत्र तत्र च परिपृच्छन् "फणेणीग्रामे श्रीस्वामिनारायणचरणसमाश्रयः कोऽप्यस्ति साधुप्रवर" इत्युपश्रुत्य तं ग्रामं सपदि प्राप। अपश्यच्च तत्र तं प्रकटपुरुषोत्तमश्रीस्वामिनारायणचरणनलिनयुगलानुस्मरणसमुन्मिषदमन्दानन्दसम्भृतान्तरङ्गं शमदमादिसाधुगुणमिव साक्षान्मूर्तं तपसा ब्रह्मचर्येण च समुज्ज्वलं धर्मज्ञानवैराग्यभक्तिभिरुत्तरोत्तरमतिशायितैः परिपूर्णं प्रभुतानन्दनामानं साधूनां प्रवरम्। पश्यतस्तं मुनिमस्य मनोनयनं तदीयहृदयगुहामध्यविद्योतमानपरमपुरुषपरज्योतिःप्रभासमाकृष्टमिव तस्मिन्नेव विलीनमिवाभूत्। तस्यापि साधुप्रवरस्यास्मिन् दिनमणिशर्मणि ज्ञानवैराग्यनिधौ कोऽपि प्रेमानुबन्धः समुदभूत्। मेने चैनं भगवतः पुरुषोत्तमस्य कृपापात्रं प्रकृत्यैव तीव्रवैराग्यपरिपूर्णं भगवच्चरणदर्शनैकसमासक्तं कमपि मुक्तचेतनं मानुषयोनावाविर्भूतम्। व्यतीयुः कतिपयदिनान्यनयोस्तत्र परस्परसमागमप्रहृष्टचित्तयोर्मिथो लोकोत्तरान् गुणाननुभवतोः।

अस्य तु दिनमणिशर्मणः प्रकटपुरुषोत्तमसाक्षात्करणसमुत्कण्ठान्वहमन्ववर्धत। अथ स दिनमणिशर्मा क्षणमपि विना भगवतो दर्शनं तत्र स्थातुमक्षमस्तत्समागमे सञ्जाततीव्रत्वरस्ततः प्रस्थितः पथि पथिकजनमुखात्—"भगवान् श्रीस्वामिनारायणः स्वचरणकमलदर्शनैकसमुत्सुकसाधुजनमनोरथपरिपूरणाय ऊंझाख्यं ग्राममचिरात्समेष्यती"त्युपश्रुत्य तमेव ग्राममभिप्रतस्थे। प्राप च तं ग्राममचिरात्। तत्र अनादिकालानुस्यूतसंसरणपथपरिभ्रमणसञ्जातपरिश्रमापनोदनाय परमानन्दमयस्य परमपुरुषस्य चरणकमलच्छायासमाश्रयणावसरं प्रतीक्षमाणानां बहूनां मुमुक्षुजनानां समवायमपश्यत्।

अथ तैः सह भगवतः सहजानन्दस्य चरणकमलदर्शनं प्रतीक्षमाणस्तत्रैवासीत्।

अथ भगवान् श्रीसहजानन्दः सकलजनमनोनयनानन्दः सर्वलोकसमाश्रयणीयः प्रणतार्तिहरः पुरुषोत्तमः परित्राणाय धर्मस्य निग्रहायाधर्मबलस्य धरातले प्रकटीभूतः श्रीमान् भक्तजनपराधीनः समाजगाम तं ग्रामम्। तदा ग्रामाद्बहिस्तटाकपरिसरप्रदेशे सुविस्तीर्णे सुमहान् समाजो भक्तानां भगवद्दर्शनकुतूहलतरङ्गिताऽन्तरङ्गाणामासीत्। व्यराजत भगवांस्तत्र भक्तजनभूयिष्ठे सदसि सहस्रमयूखमालिन्युदयाचलशिखरमधिरूढे स्वयं पूर्वाभिमुखः सकलजनदर्शनसमुचिते सुखास्तरणसुशोभिते महति सिंहासने परिवृतः परमहंसैः। अथ तदा सोऽयं दिनमणिशर्मा दूरादेव तं वीक्ष्य सञ्जातपरमाह्लादः "सोऽयमानन्दमयः सकलदुःखप्रशमनैकपदं परतरः सर्वस्मात् प्रकटतामुपयातः परमकृपये"ति विनिश्चित्य तत्समीपमेत्य "भगवन्! पुरुषोत्तम! श्रीस्वामिनारायण! तवैव दासः, त्वदेकजीवितस्त्वदेकशरण" इत्युच्चैर्वदन् भक्तिभारावनमितसर्वगात्रो दण्डवत् प्रणाममकरोत्।

स भगवान् सकलहृदयगुहाशयस्तस्यास्य दिनमणिशर्मणः स्वस्मिन् अकृत्रिमं प्रेमानुबन्धम्, विद्वेषं च विषयेषु साहजिकम्, भीतिं च संसृतेर्जानन्, आलक्ष्य चास्य चाकृतावेवोपलक्ष्यमाणं वैराग्यभक्तिप्रकर्षं "सोऽयमौद्धवसम्प्रदायस्यास्मदभिमतस्य परितः प्रवर्तको भविष्यती"त्यवधृत्य शमया दृष्ट्या पश्यन् प्रश्रयावनतमूर्धानं तमात्मनः समीपमानाय्य स्वागताभिनन्दनादिना आनन्दयामास।

अथ स दिनमणिशर्मा परममृतमभयं परात्परतरं तद्दिव्यस्वरूपं साक्षादवलोक्य प्रहृष्टहृदयस्तमेव श्रीस्वामिनारायणमसकृदनुध्यायन्, जातु तन्नामामृतान्यास्वादयन्, जातु तच्चरणपरिचरणमाचरन्, जातु तस्मिन् विलीनसर्वेन्द्रियप्राणवृत्तिः चित्तप्रसादमापन्नः परिपूर्णमनोरथोऽभूत्

अथ च निजचरणनिकट एव समुपवेशितम्, स्वदिव्यावयवशोभासन्दर्शनजनितपरमानन्दसागरसन्निमग्नम्, स्वस्मिन् विलीनमनोनयनवृत्तिकम्, भगवान् प्रसन्नः सपदि समाधिमापाद्याक्षरधामैकनिलयमानन्दमयं नित्यमुक्तोपसेव्यं स्वं दिव्यं स्वरूपं साक्षात्कार-

यामास । एवं तदेकानुगतसकलकरणव्यापारः कानिचिद्दिनान्यत्यवाहयत्। भगवानप्यस्य भावविशेषमवगत्य स्वसन्निधावेवावासयत्।

अथास्य दिनमणिशर्मणः पारमैकान्तिकीं साधुदीक्षां भगवतः श्रीस्वामिनारायणात् सकलभुवनपरमगुरोः सम्प्राप्तुं समुत्कण्ठा महती समभूत्। प्रार्थयामास चावसरे भगवन्तम्। प्रार्थितो भगवान् आशैशवात् परित्यक्तगृहबन्धुक्षेत्रादिकम्, व्यपेतविषयवासनम्, वैराग्यैकनिधिम्, शमदमादिसकलसद्गुणसम्पन्नम्, स्वचरणनलिनैकप्रेमरसपरिपूर्णमेनं दीक्षायाः पात्रमुत्तममवबुद्ध्य पारमैकान्तिकसाधुदीक्षाविधानेन प्रापयामास भागवतीं दीक्षाम्।

चक्रे चास्य–गुणत्रयातीतब्रह्मात्मकस्वात्मानुभवानन्दैकनित्यतृप्तस्य प्राप्तदीक्षस्य दीक्षाङ्गभूतं नित्यानन्द इत्यन्वर्थं नाम।

अथ तस्यास्य बाल्य एवाभ्यस्तवेदवेदाङ्गस्यापि सकलदर्शनेषु प्रावीण्यमापादयन्, न्यायमीमांसाद्यनेकशास्त्रनिष्णातस्य कस्यचित् पण्डितप्रवरस्य सन्निधौ तमेनं नित्यानन्दमुनिं स्थापयित्वा मणिमिव शाणोल्लीढमकारयत्।

सोऽयं नित्यानन्दमुनिरध्यापकानामप्याश्चर्यावहया अप्रतिमया प्रतिभया निसर्गसिद्धया, सकलसदस्यसुमनःसमाह्लादकया च वाग्मितया, भगवदनुग्रहैकमूलकेन अध्ययननिमित्तमात्रकेण वैदुष्येण सकलदर्शनमर्मस्पृशा, निखिलवादिजनविमथनक्षमेण तर्ककौशलेन च सम्पन्नः परमहंसमण्डले सर्वेषामेव माननीयः समभूत्।

भगवांश्चास्य निरुपमं प्रतिभातिशयं वैदुष्यं च बुधजनश्लाघनीयं समुपलक्ष्य सदसि श्लाघयन्–" अयमस्मदौद्धवसम्प्रदायसम्प्रचारौपयिकं प्रतिकथकनिरसनं कुर्वन् करिष्यति दिग्विजय" मित्यनुग्रहमस्मिन्नकरोत्।

एवं भगवता परमपुरुषेण सदसि विरचितेन सुदुर्लभेन प्रसादातिशयेन सर्वेषां परमहंसानामस्मिन् नित्यानन्दमुनौ परमादरः सुबहुमानावलोकनपूर्वकः समभूत्।

एवमखिलजनश्लाघापात्रस्याप्यस्य मानसे लेशतोऽप्यवकाशं नालभत मानः। स हि सपदि पदं निदधाति प्रायो विद्यादिमहि-

मैकसम्पन्नेषु पुरुषेषु। परं विज्ञानभूषणेन विनयेनैव सकलमुनिजनमनःसमाह्लादको बभूव।

विद्ययेव विरक्त्या भक्त्या तपश्चर्यया च सुसमृद्धया पारमहंसं पदमात्मनः सुशोभयन्, आचरंश्चानुदिनमनुध्यानादिनिजधर्मम्, अध्यापयंश्च बहून् परमहंसादिकान् नैःश्रेयसैकान्तानि शास्त्राणि, श्रीस्वामिनारायणचरणकमलपरिचर्यापरायणस्तदादेशेन तत्र तत्र नगरग्रामादौ सदुपदेशसच्छास्त्राध्यापनादिभिरौद्धवं सम्प्रदायमुन्नमयन्, सकलसत्सङ्गरसिकजनसमादरणैकपात्रमभूत्।

अथ सोऽयं नित्यानन्दमुनिरादेशं भगवतः शिरसा वहन्, श्रीमदौद्धवसम्प्रदायं सदुपदेशसदाचरणादिभिः शनैः प्रवर्तयन् प्राप वटोदरनगरं सह मुनिमण्डलेन। तत्र बहवो दैवीं सम्पदमभिजाताः श्रीस्वामिनः सदुपदेशैः सञ्जातसत्सङ्गैकरुचयः श्रीस्वामिनारायणे प्रकटपुरुषोत्तमभावनां सुदृढामनुप्राप्य तच्चरणानुध्यानतन्नामसङ्कीर्तनादिकं परमभक्त्या कुर्वन्तः सम्प्रदायमौद्धवं निःश्रेयसाय समाश्रयन्ति स्म॥

अत्रान्तरे—तत्रत्यश्रीमन्महाराजाधिराजश्रीसयाजिभूपालकृपाकटाक्षलब्धवृत्तयो, वादाहवैकविनियुज्यमानविद्याकौशलाः, साधुजनावमाननैकफलकदुर्वादैकान्तकुतर्ककुशलाः, काणादादिकतिपयशास्त्राभ्यासमदान्धाः कतिचन पण्डिताः नैसर्गिकासूयाभिभूतास्तमिममौद्धवसम्प्रदायप्रचारं न सेहिरे।

उदारहृदयैर्भूपैः सभालङ्करणप्रियैः।
पोष्यमाणाः प्राप्य वृत्तिं क्लेशलेशविवर्जिताम्॥
एधमानमदाः प्रायो मात्सर्यग्रस्तचेतसः।
अभ्यस्तमखिलं शास्त्रं शस्त्रीकुर्वन्ति पण्डिताः॥

त एते परोत्कर्षासहनैकप्रकृतयः समुन्मिषदीर्ष्यातिरेकप्रज्वलद्धृदयाः मिथः सम्भूय विजेतुमेनं नित्यानन्दमुनिमभ्येत्य वादाय प्रावर्तन्त। तदा स मुनिवरस्तान् विज्ञाय विजिगीषया समुपस्थितान् प्रसन्नहृदयः प्रहसन्निदमाह—

हन्त? भोः पण्डिताः! सुमहान्नः सम्मोदः, यदयमवसरो नः प्राप्तो भवतां पाण्डित्यपरीक्षणस्य, प्रशमैकपराणां जिज्ञासुजनाववो-

धनैकप्रवृत्तानां विजिगीषुकथायाः प्रसङ्गो हि दुर्लभः। तत्-युष्मासु यस्य यस्य यस्मिन् यस्मिन् शास्त्रे परिचयस्तत्र तत्र तेन तेन क्रमशो विचारः प्रस्तूयतामिति। अथ तदा व्याकरणन्यायादिषु विचारः प्रावर्तत। तत्र तत्र यो यो यं यमप्रतिसमाधेयमाक्षेपं मत्वा वादाय महता संरम्भेण प्रावर्तत, स स पण्डितः स्वामिना प्रगल्भवचनेन तर्ककुशलेन तत्र तत्र पूर्वपक्षांश एव आक्षिप्यमाणः स्वपरिगृहीतं पूर्वपक्षं द्रढयितुमक्षमो मूकीभूतवदनो विरराम जल्पतः। एवं सर्वेष्वपि क्रमशः परास्तेषु केचन पण्डितम्मन्या असहमानाः स्वपक्षपराभवमौद्धवे सम्प्रदाये आक्षेपान् कर्तुमारभन्त। स्वामी च सम्प्रहृष्ट एव सन् तत्तदाक्षेपाणां सुसमीचीनाभिर्युक्तिभिः सप्रमाणाभिः परिहारमकरोत्।

अथ तदा सर्वे ते व्यपेतपाण्डित्यमदा अपि अनपेतासूयापिशाचावेशाः स्वामिनस्तथाविधविद्यापराक्रमेण प्रतिरुद्धवादगतयोऽवनतवदनाः सदसः समुत्थाय स्वस्वावासान् जग्मुः।

अथ केचन सत्त्वप्रकृतयः पाण्डित्यप्रभावं स्वामिनः प्रशंसन्तः प्रणम्य स्वामिनं तदनुग्रहपात्रमभूवन्।

अथ स्वामी तत्र नगरे औद्धवसम्प्रदायं सुदृढप्रचारं विधाय अन्येषु च तेषु तेषु ग्रामनगरेषु सदुपदेशेन सत्सङ्गमभिवर्धयन् औद्धवसम्प्रदायसम्प्रचारैकव्यापृतहृदयो बभूव।

अथ कतिपयेषु हायनेषु व्यतीतेषु अनुदिनमनुवर्धमाने श्रीमदौद्धवसम्प्रदाये, परिस्फुरति च परितः श्रीस्वामिनारायणचरणपरिचरणपरायणसाधुजनसदुपदेशसमुज्जीवितसत्सङ्गवलये।

तत्र तत्र वर्तमानानां भोगैकशेषीकृतनिजनिजाचार्यपदस्योच्छेदमाशङ्कमानानां तत्तदाचार्याणामाशयेषु इर्ष्याद्वेषादयः प्रववृधिरे। तेष्वपि श्रीनगरे वर्तमानस्य श्रीगोस्वामिनः समुन्मिमेष विशेषत ईर्ष्याद्वेषसमुद्भवः क्रोधाग्निः। अथ समूलमुन्मूलनमौद्धवसम्प्रदायस्य चिकीर्षन् वादाहवे साहाय्याय ततः ततः प्रतिष्ठितान् समानलान् पण्डितान् षट्पञ्चाशङ्कोगोत्सवविधानव्याजेन स्वनगरे सम्मेलयामास।

अथ बडोदरानगरं वर्तमानान् महाराजसभास्थानपण्डितान् गूढमाशयमावेद्य समानेतुं लेखमेकं प्रेषयामास । ते चावधृतलेखार्थाः प्रागेवेर्ष्याग्निप्रधूमितहृदयाः श्रीमदौद्धवसम्प्रदायखण्डने प्रवृत्तानां साहाय्याधाने सञ्जातत्वराः श्रीमन्महाराजाभ्यनुज्ञां विना गमने वृत्तिहानिं विचार्य श्रीमन्महाराजसन्निधिं सम्प्राप्य कार्यावसरं स्वेषां न्यवेदयन् । श्रीमन्महाराजश्च तेषां वचनं समुपश्रुत्य धर्मज्ञानवैराग्यभक्तिप्रधानस्यौद्धवसम्प्रदायस्योन्नतिमेवाकाङ्क्षमाणस्तस्मिन्नस्मिन् सम्प्रदाये तेषामेषां च प्रद्वेषमुभयतोऽनर्थावहमवधृत्य विद्वेषमूलकात्तस्मारम्भात्तस्मात्तान्निवर्तयन्निदमाह-

" भोः पण्डिताः ! शोभते नाम विदुषां बुधजनसदसि समुपस्थानम् । शास्त्रचर्चायां समुपस्थितायामप्रधृष्य विज्ञानवैभवैरग्रभाग एव स्थेयं नाम । अथापि सभायाः स्वरूपं कीदृशमिति तु विचार्यं प्रथमत एव । अथ च सभायां वादाहवे यैः सह प्रतियोद्धव्यं तेषां विद्याबलादि विचारणीयम् । तदिदमविचार्य सपदि प्रत्यवस्थानं केवलमवमतय एव स्यात् । तत्र सभायाः स्वरूपं तु विचार्यमाणं रागद्वेषविलसितमित्येव स्फुटं प्रतीयते । यदौद्धवे सम्प्रदाये समुपदिश्यमानं धर्मो ज्ञानं वैराग्यं भक्तिश्चेत्येतन्न श्रुतिस्मृतिपथतो बहिर्भूतम्, येन तन्निरसनाय श्रुतिस्मृत्यनुसारिभिः प्रयत्न आधेयः । नत्तस्मिन् सम्प्रदाये सदुपदेशसमनुवृद्धेन सतामादरेण भवति परोत्कर्षासहिष्णुतालक्षणः प्रद्वेषः केवलं मानग्रस्तचेतसाम् । तत् रागद्वेषैकव्यापाररूपेऽस्मिन् सदसि विदुषां वोऽस्मदीयानां सङ्गतिर्न नः प्रतिभाति समुचिता ।

अथ तत्र सदसि समुपस्थास्यति स **नित्यानन्दमुनिः**, येन सह विवादो युष्माभिः कर्तव्यो भवेत् । यस्यात्मबलं विद्याबलं चानुभूतपूर्वं युष्माभिः । किं वा युष्माभिः ततोऽप्यधिकमात्मबलं विद्याबलं वा सम्पादितमधुना ? येनेयं धैर्यसम्पदधुना वः । द्वेषौत्कट्यबलान्नापरं वोऽधुनेति तु नः प्रतिफलति चेतसि । तत् कीर्तिर्यास्ति न सा विनाश्येत्यतेत्तु वयं युष्मान् ज्ञापयाम " इति ।

अथ ते पण्डिताः समारम्भोऽयमस्मदीयो महाराजस्यानभिमत इति मौनमेव साधनं सुखोदर्कमाश्रयन्तः स्वस्वगृहाणि प्राप्य केवलमनुक्षणमुन्मिपन्तं द्वेषाग्निं कथमपि अन्तरेव प्रशमयन्त आसन्। श्रीमन्महाराजस्तु प्रतिबोध्यैवमेनान्, नित्यानन्दमुनिमाविज्ञातशत्रुजनकोलाहलं सन्देशमिमं प्रापयामास।

"श्रीनगरे केचन प्रतिपक्षिणः औद्धवसम्प्रदायस्यानिष्टमाचरन्तो वादाहवाय महान्तमारम्भं कुर्वन्ति, तत्र सदसि समये भवता सान्निधाय विजित्य परिपन्थिनः स्वसम्प्रदायः परिपोषणीय" इति।

अथ स्वामी नित्यानन्दमुनिर्विज्ञातोदन्तः सपदि प्रतस्थे श्रीनगरं सहैव भगवदानन्दप्रभृतिविद्वाच्छिष्यमुनिमण्डलेन। तमेनमायान्तमुपश्रुत्य श्रीनरनारायणचरणनलिनसान्निध्यसमेधमानधर्मश्रीसमृद्धसनातनधर्मधुरन्धराचार्यपदालङ्कारभूतः श्रीमानयोध्याप्रसादमहाराजः सबहुमानं मन्दिरं समानयन् समादिदेश निजपुत्रं केशवप्रसादाख्यं महानुभावानन्दादीनिजसाधुजनान् पार्षदादीन् भक्तजनांश्च प्रत्युद्गन्तुम्। ते च सर्वे यथादेशं प्रत्युद्गम्यैनं सद्गुरुप्रवरं नित्यानन्दमुनिं सह मुनिमण्डलेन प्रेक्षकसकलनगरजनकौतुकापादकेन महता संरम्भेण प्रापयन् मन्दिरम्।

अथ सपदि प्रत्यर्थिनां मनसि कोऽप्युद्वेगः समाविशत्। अन्तःसमुद्विग्नहृदया अपि ते समुत्कटेन द्वेषेण समारब्धं वादाहवं परित्यक्तुं नाशक्नुवन्। किञ्च–प्रागेव लेखमुखेन प्रत्यर्थिभिस्तैः "वः सम्प्रदायो न वेदमूलकः, यश्चोपास्यो वः स्वामिनारायणः स न भगवान् पुरुषोत्तमः" इति प्राधान्येन विप्रतिपत्तिद्वयं सूचितमासीत् श्रीमदाचार्यसन्निधौ।

अथ यथासमयप्रबन्धं महती सभा समभूत् श्रीनरनारायणमन्दिराङ्गणे, तत्र यथाक्रमम् उपाविशन् मुनयः सद्गुरवः सत्सङ्गश्रद्धाशुद्धान्तःकरणाश्चान्ये। अथाजग्मुश्च चिरसमुत्कण्ठितं स्वमनोरथमुद्धवसम्प्रदायखण्डनं प्रसाधयन्तः प्रत्यर्थिनो नानाशास्त्राभ्याससमुपलब्धपाण्डित्याभिमानैरनेकैः समुत्तेजितधैर्यशक्तयः कथमपि सभास्थानम्।

पाण्डित्यगर्वसम्मूर्च्छद्‌हुङ्कारोद्गारदारुणाः ।
प्रत्यर्थिपक्षरक्षार्थं प्रत्यतिष्ठन् कुतार्किकाः ॥
व्याकुलीकृतवेदान्तप्रतिभाभासशालिनः ।
परिष्कर्तुं परमतं परे केचिद्विरेजिरे ॥
साङ्ख्यसिद्धान्तदिग्दर्शिकारिकापाठपण्डिताः ।
उद्वल्गुः फल्गुधियः पुंप्रकृत्योः परीक्षकाः ॥
शब्दशास्त्रपरिश्रान्ताः शब्दशिक्षणदक्षिणाः ।
समलक्ष्यन्त सोष्णीषाः परपक्षप्रपूरकाः ॥

एवं स्वपक्षबलं सङ्ख्यापूरकैरन्यैश्च भृत्या सम्पादितैः पण्डितैरापूरयन्तः प्रत्यर्थिनः सङ्घीभूय निर्दिष्टे स्थाने समुपविविशुः ।

अथ नित्यानन्दमुनिः स्वशिष्यमण्डलेन सह सभां समाजगाम. सकलसदस्यजनदर्शनयोग्ये समुन्नते आसने प्रागेव परिकल्पिते समुपविवेश स मुनिराजः । तं परितस्तस्य शिष्या उपविविशुः । सभामध्यमध्यासीने तस्मिन् नित्यानन्दस्वामिनि सदसि समुपस्थितानां सर्वेषामेव दृष्टिः समाकृष्टेव सपदि समपतत् । दृष्टमात्रे तस्मिन् भ्राजमाने केनाप्यपूर्वेण तेजसा नैसर्गिकेन आबाल्यादनुपाल्यमानब्रह्मचर्यप्रभूतेन वर्चसा, अनुदिनमनुध्यायमानस्य हृदयतले परिस्फुरतो ज्योतिषां ज्योतिषः प्रभापुञ्जेन बहिःस्फुरमाणेन आध्यात्मिकबलेन च प्रचकम्पे प्रत्यर्थिनां चेतः । व्यगलच्च धैर्यबलं वादाहवे । स्फूर्तिपथाद् दूरीबभूवुश्चिरतराभ्यस्ताः शास्त्रविषयाः ।

अथ स नित्यानन्दस्वामी बहुमानगर्भया गभीरया गिरा विद्वन्मण्डलमिदमब्रवीत्–

"भो भोः पण्डितप्रवराः ! समधिगतविविधशास्त्ररहस्यानां समलङ्कृतानेकसभास्थानानां भवादृशानां पण्डितप्रवराणां समागमश्चिरादस्माभिरभिवाञ्छितोऽयमधुना श्रीस्वामिनारायणकृपया लब्धः । युष्मद्वादवैखरीश्रवणाय स्पृहयामो वयम्, तत् प्रस्तूयताम् कश्चन वादः, यत्र वो रुचिः प्रागल्भ्यं च "।

तदिदं स्वामिनो वचनं गाम्भीर्यधैर्योपेतं अनपेतमर्यादं विनयविवेकमसृणं पाण्डित्यातिशयानुरूपं समुपश्रुत्य ते प्रत्यर्थिनः क्षणं

स्तब्धीभूता मिथो मुखमवलोकयन्तः कथं कथमपि काश्चन कर्णजाप-प्रयोगेन समुत्तेजयामासुः ।

अथ तथा समुत्तेजितश्चैकः कथमप्यापादितधैर्य इदमाह–

" अयं नः प्रथम आक्षेपः–युष्माभिः प्रवर्त्यमाने सम्प्रदाये किं प्रमाणम् ? य उपास्यः, तस्य सर्वेश्वरत्वे च किं प्रमाणम् ?" इति ।

तमिममाक्षेपं पामरजनविमोहकमीर्ष्यैकमूलकमसारमपि सदसि समुपस्थितानां तटस्थानामाक्षेपस्याज्ञानमूलकतां ज्ञापयन् सोऽयं नित्यानन्दस्वामी धर्मज्ञानवैराग्यभक्तिप्रधाननिजसम्प्रदायानुबद्धानां धर्मादीनां श्रुतिपथानुगामिताख्यापनेन, स्वोपास्यश्रीस्वामिनारायणस्य सप्रमाणं प्रकटपुरुषोत्तमतास्थापनेन च निराचकार ।

सोऽयं निराकरणप्रकारः समग्रः पृथक्-निबन्धपदमर्हतीति श्रीस्वामिजीवनचरितमात्रनिरूपणे प्रवृत्ता वयं न तस्येहावसरं पश्यामः ।

श्रुतिः स्मृतिः पञ्चरात्रं यैः प्रमाणमितीष्यते ।
तदीयसम्प्रदायस्य कः शङ्केताप्रमाणताम् ? ॥
विरोधो यस्तु शङ्क्येत तदज्ञानविजृम्भितम् ।
अविरोधेन नयनात् सत्तर्कसमुपाश्रयात् ॥
सिद्धान्तिभिः सारविद्भिराशङ्का ननु वार्यते ।

अथ चरितमेव प्रक्रान्तमुच्चयामः–

एवमौद्धवसम्प्रदायस्य निर्बाधतां श्रुतिस्मृतिवचनैः सदसि प्रसाधयतोऽस्य अप्रधृष्यतर्कतरङ्गवेगे प्रवहति निरर्गलनिर्गलद्गम्भीरवाक्प्रवाहे प्रत्यवस्थातुं प्रत्यर्थिनो न प्राभवन् ।

अथ तदा केचन जिज्ञासव इव वेदान्तविचारायारेभिरे—

तदा पराभिमतं ब्रह्मस्वरूपपरिणामवादमुपनिषदनुकूलैः सूत्रपथसमधिरूढैस्तर्कैर्निरस्य. श्रीमदुद्धवसम्प्रदायाभिमतमौपनिषदसिद्धान्तमबाधिताखिलत्रय्यन्तसुसङ्गमनमनुपपत्तिलेशविवर्जितं स्वेतरसमस्तचिदचिद्विशिष्टब्रह्माद्वैतावलम्बं सुदृढीचकार ।

अथ सर्वेषु तेषु प्रत्यर्थिवृन्देषु भग्नदर्पेष्ववनतवदनेषु सभास्थानादपसर्पत्सु स्वामी प्राह–

" अयि भोः पण्डिताः ! यदि वो विषये क्वापि शास्त्रीये विजिगीषा वा विजिज्ञासा वा तद्विचार्य पुनरागम्यता " मित्यनेन

वचनेन विशेषतः सञ्जातत्रपा मौनमेव शरणमाश्रित्या-पससर्पुः ।

अथ यथा यथायमौद्धवः सम्प्रदायः समवर्धत, तथा तथा तस्मिन्नस्मिन् सम्प्रदाये समवर्धत दुर्मानमदमत्तानामन्येषां चिरानुवृत्ताचार्यपदव्यपदेशभाजामसूया । तेषु जगद्गुरुपदमसाधारणमात्मन एव मन्यमानस्य मठाधिपत्यप्राप्तशङ्कराचार्याभिख्यस्य तु विशेषतोऽभूत् । सोऽयं सदसि मध्यस्थजनसमधिष्ठिते समयबन्धपूर्वकं विधाय शास्त्रविचारमौद्धवसिद्धान्तनिष्ठान विजेतुमसामर्थ्यमात्मनो विचिन्त्यानुदिनमनुवर्धमानयोरसूयानद् द्वेषयोरुपशममौद्धवसम्प्रदायानुप्रविष्टब्राह्मणजनपीडनेन सम्पादयन् उदुम्बरपुरस्थान् सत्सङ्गिनो विप्रान् ज्ञातिजनसमवायतो बलाद्बहिष्कारयन् हव्यकव्यादिकर्माणि क्लेशमापादयन् केवलं पामरसधर्मा दारुणारम्भो बभूव । सत्सङ्गिभिर्विप्रैरन्यैश्च तटस्थैर्बहिष्कारकारणं पृष्टोऽपि नैव किमपि समीचीनमुत्तरमाह । अथौद्धवे वर्त्मनि सभासमक्षमाक्षेपं शास्त्रीयं कर्तुमसमर्थः सन् अनभ्यनुजानंश्च सभाप्रसङ्गमात्मनः स्वातन्त्र्यमीर्ष्यादिमूलकं दोषमेव च विना वचसा क्रियया ख्यापयामास । तदा सोऽयं नित्यानन्दस्वामी सत्सङ्गिनां विप्राणां जातमिमं क्लेशं प्रशमयन् शास्त्रीयेणैव वादेन शङ्कराचार्यस्य पुरतः श्रीमदौद्धवसम्प्रदायं सिद्धान्तीकर्तुं स्वयमेव सह शिष्यजनमण्डलेन प्रापोदुम्बरनगरम् । नगरे परितः ख्यापयामास चेदम्—

" वयमधुना श्रीमदौद्धवसम्प्रदायं सदसि विदुषां सिद्धान्तयितुं समागताः स्मः । यो नामात्र विषये विवादं कर्तुमिच्छति स समयनिर्णयपूर्वकं समुपतिष्ठतु, वयं वासमुपातिष्ठामः " इति ।

तदिदमुपश्रुत्य शङ्कराचार्यः सदसि विचाराय प्रत्यवस्थानमकृत्वा ज्ञातिजनकोलाहलं केवलं स्वप्रशासनबलसाध्यमकारयत् ।

अथ स्वामी स्वयमेव स्वसिद्धान्तसमर्थनमिच्छन् सम्प्रदायविदूषकस्यापि परस्य स्थाने गमनमनुचितमपि निजसिद्धान्तस्थापनाय सत्सङ्गिजनचेतःसमाह्लादनाय च आवश्यकं विनिश्चित्य परिवृतो भगवदानन्दादिनिजशिष्यैः शङ्कराचार्यस्यावासं प्राप, प्राप्य च तस्य पुरतः स्वसिद्धान्तं सप्रमाणं सोपपत्तिकं च निरूप्येदमाह—

"अत्र चेदाक्षेपः कस्यचित्स प्रतिवक्तु प्रमाणपथानुगामिना सत्तर्केणे"ति। उपश्रुत्येदं स्वामिनो वचनं शङ्कराचार्यः अपेतशास्त्रविचारं सम्भूयात्मीयैः सह केवलं शब्दकोलाहलं कुर्वन् कालं नयन् सभासमयमत्यवाहयत्। अथ परदिने पुनरुपक्रान्ते विचारे स शङ्कराचार्यः अनादृतशास्त्रविचारः पामरग्रामकैः शब्दाडम्बरैः कालमनयत्। अथ स्वामी तस्मिन् दिनेऽपि व्यर्थपरिश्रमो भूत्वा व्यचिन्तयत्–"अयं वितण्डयैव कालं नयति, पामरान् मोहयति, तदस्य योग्यः प्रयत्न आधेय" इति विनिश्चित्य परदिने सह शिष्यैः प्रबुद्धैर्भगवदानन्दादिभिरन्यैश्च सदसद्विवेचनसमर्थैस्तटस्थैश्च पण्डितैः सह शङ्कराचार्यस्य स्थानं प्राप्य गभीरमिदमवदत्–

"ग्रामे पामरजनभूयिष्ठे ज्ञातिकोलाहल इवायं नावधेयः, अयं हि शास्त्राभिमतसिद्धान्तविचारः, अतोऽस्माभिरुपपादिते श्रीमदौद्धवसिद्धान्ते यदि शास्त्रविरोध उद्भाव्यते ? उद्भाव्यताम्, वयं परिहर्तु सन्नद्धाः स्मः, इमे च तटस्थाः, बहवश्चेमे श्रोतारः सन्त्यभिज्ञाः। यदि मौनं वा वाक्कोलाहलमात्रं वा समाश्रीयेत, तर्हि यूयं पराजिता इति मध्यस्थजनैर्विनिश्चीयेत। नाद्विचार्य योग्यमुच्यताम्"

इत्युक्त्वा प्रमाणवचनोपन्यासपूर्वकं स्वयं स्वसिद्धान्तं स्थापयामास। अथ तस्मिन् कोलाहलं कर्तुमशक्नुवन् शङ्कराचार्यः अविचारसहान् कांश्चनाक्षेपानकरोत्। स्वामी च तानाक्षेपान् तर्कोपपन्नैः प्रमाणवचनैर्न्यरस्यत्। एवं स्वसिद्धान्तं स्थापयित्वा अद्वैतमते कांश्चनाक्षेपान् दुरुद्धरानुद्भावयामास स्वामी। तदा अनधिगतस्वसिद्धान्तरहस्यस्तूष्णीं बभूव समलङ्कृतश्रीशङ्कराचार्यपदः। एवं प्राप्य पराभवं भीतभीत इव च पलायिते तस्मिंस्ततो नगरात्, प्रशान्ते च सत्साङ्गिजनस्य ज्ञातिकोलाहले, तस्मिन्नेव ग्रामे सत्सङ्गिविप्रजनसुखसमृद्धिं सम्पाद्य प्रत्यागच्छत् स्वस्थानम् वृत्तालयम्।

एवमध्ययनाध्यापनप्रत्यर्थिजनविजयादिना श्रीमदुद्धवसम्प्रदायसेवां कुर्वन्नेव भगवतः सबहुमानावलोकनपात्रं भवन् सकलसन्मण्डलमान्यतमः समभवत्।

अथ जातु रामनवम्युत्सवे जीर्णदुर्गपुरस्थभक्तजनप्रार्थनया जीर्णदुर्गपुरं गच्छता भगवता सह जीर्णदुर्गपुरं जगाम। तत्र भग-

वतः श्रीहरेश्चरितममानुषं सकलनगरजनश्लाघ्यमानं तद्देशाधीशो महाराजो माहम्मदीयो बहादराख्यो भगवन्तं राजभवनमानाय्य समर्हणं विधातुं वाञ्छन् अमात्यमादिदेश अस्मिन्नारम्भे अवहितेन त्वया भाव्यमिति ।

अथ तन्नगरस्थाः कतिचन जान्या नागरसंज्ञा अधिकृतराज्यकार्या महाराजपार्श्वपरिवर्तिनः, भगवति श्रीस्वामिनारायणे तत्सम्प्रदाये च बद्धासूया राजकृततत्सन्मानप्रसङ्गेन द्विगुणीभूतासूयाग्रस्तचेतसस्ते राजसदसि स्वामिनारायणसम्प्रदायस्य परिभवं कारयन्तो निगूह्य स्वदुराशयं स्वामिनारायणसम्प्रदाये आदरभरं दर्शयन्तः कमपि शब्दाडम्बरमात्रविदग्धं नरसिंहनामानं विप्रं भगवतः श्रीस्वामिनारायणस्य समर्हणसमये राजभवने पण्डितजनसमवाये प्रवेशयन्तो महाराजमवसरे समवबोध्य प्राप्य तस्याभ्यनुज्ञां तं वाचाटं स्वपक्षीयं तस्मिन् समये राजभवनं प्रावेशयन्। अथ भगवति श्रीस्वामिनारायणे निजचरणकमलरसिकानेकपरमहंसपरिवृते राजभवनं समुपस्थिते यथायथमुपविष्टेषु भगवदभ्यनुज्ञेषु सदसि महाराजेन भगवतः प्रभावावलोकनसञ्जातमहाविश्वासेन यथार्हं राजोचितमहोपचारैः समभ्यर्चितो भगवान् परिमितपरिजनपरिवृतः प्रथमं राजभवनान्निर्ययौ ।

अथ परमहंसाः सद्गुरवो राज्ञा सह हितमधुरं सम्भाषमाणास्तस्थुः । अथ तदा स नरसिंहः प्राप्यावसरं पण्डितप्रवर इव नाटयन्, ईश्वरस्वरूपं तत्प्रादुर्भावादिप्रकारं तत्र निमित्तं देशकालनियमं च साकूतं गभीरया गिरा पूर्वपक्षरूपेणापृच्छत्। श्रुत्वैवंविधं तस्य प्रश्नं नित्यानन्दस्वामी प्रगल्भैः प्रमाणोपेतैरुपपत्तिभूयिष्ठैर्वचनैः सर्वानाक्षेपान् परिहृत्य, भगवतः प्रादुर्भावप्रकारं भगवदैश्वर्यप्रकारं च समर्थयामास । तदा अपरिचितपरमतं नरसिंहोक्तेः स्वामिनः प्रतिविधानस्य चाशयं जिज्ञासमानं तं महाराजं स एव नित्यानन्दस्वामी पूर्वपक्षिणो नरसिंहस्य आशयं समाधानं च स्वोक्तं सकलं तेन कृतमतिवादं चायोग्यं स्वेन सुसमीचीनेन न्यायेन प्रोक्तं समाधानं च सुग्रहमबोधयत् ।

तदा स राजा तस्य स्वामिनः पाण्डित्यं प्रशंसन् अतिवादिनं तं नरसिंहं सभातः प्रथमं प्रस्थाप्य स्वामिनमन्यांश्च सद्गुरून् यथायोग्यं सम्मान्य सुबहुमानं प्रेषयामास ।

सोऽयं नित्यानन्दस्वामी समर्थयन् सदसि स्वसिद्धान्तं, प्रतिष्ठापयंश्च बुधजनपरिषदि प्रकटपुरुषोत्तमस्य भगवतः श्रीस्वामिनारायणस्य पारमैश्वर्यं, विद्रावयंश्च वादाहवेषु निशिततरसत्तर्कशरजालेन प्रतिकथकपरबलम्, श्रीमदौद्धवसम्प्रदायस्य जङ्गमः कोऽप्येष विजयस्तम्भ इति ख्यायमानः कलिबलसमुद्भूतासुरोपद्रवप्रशमनाय साधुजनपरित्राणाय समुद्धरणाय धर्मसेतोः प्रकटीभूतस्याक्षरनिलयस्य पुरुषोत्तमस्य परब्रह्मणो भगवतः श्रीसहजानन्दस्य दक्षिणभुजस्थानतां प्राप्तः, भगवत्परमानुग्रहैकभाजनतां च प्राप्तः सर्वमायुः श्रीमदुद्धवसम्प्रदायसमुत्कर्षाधानैकव्यापृतं कुर्वन् सकलसद्गुरुमण्डले परां प्रतिष्ठां प्राप ।

अप्रकम्प्या चास्य भगवति श्रीस्वामिनारायणे निष्ठा परा भक्तिश्च । भगवान् श्रीहरिस्तस्यास्य निष्ठां भक्तिं चात्मनि परामविचाल्यां जानन्नपि परीक्षामुखेन सर्वेभ्यः प्रकाशयितुं प्रकटस्वस्वरूपपारम्याभिनिवेशमूलकमस्य सदाग्रहमस्थानोद्भवमिवावज्ञाव्याजमापाद्य परमप्रीतिपात्रे माननैकयोग्ये तस्मिन् क्रोधवेगमभिनयन् अवजानन्निव निष्ठुरेण वचनेन तिरश्चकारेव तम् ।

अथ स तदेकपारम्यनिष्ठस्तच्चरणानुध्यानैकपर अनुद्विग्न एव तदादेशानुवर्ती तदेकभक्तिनिष्ठस्तदनुभवानन्दैकतृप्तनित्यानन्दनामात्मनोऽन्वर्थयन् तस्थौ। तदा पुनरन्यस्मिन् दिने भगवान् सदस्यवोचत्-"अयि भोः परमहंसाः ! शृणुत सावधानम्! अयमस्माभिरवगतैतन्निष्ठभक्तिरपि परेषां कृते परीक्षापदं प्रापितः, स्वासाधारणे धर्मज्ञानवैराग्यभक्तिप्रकर्षे अस्मत्स्वरूपनिष्ठायामस्मदादेशानुपालने च लेशतोऽपि वैकल्यं न प्रापत् । अयं हि निदर्शनं भवति सद्गुरुमण्डलप्रामुख्यस्य । अत एवैनं वयं नो दक्षिणभुजमिव मन्यामहे, तद्युष्माभिरखिलैरपि सर्वथास्मिन् सुबहुमानं समादरः कार्य " इति ।

अथ जातु-वृत्तालयं समलङ्कुर्वति भगवति श्रीहरौ विराजमानेषु सद्गुरुवरेषु दक्षिणप्रान्तनिवासी कोऽप्यद्वैतमतावलम्बी अधीतशाङ्करभाष्यादिग्रन्थः विद्यामदेन आत्मानं वेदान्ताचार्य इति व्यपदेशेन ख्यापयन् प्राप्य वृत्तालयं भगवता समधिष्ठिते सद्गुरुमण्डलमण्डिते भक्तजनपरिवृते सदसि समेत्य समनुज्ञातो भगवता समुपविवेश लब्धावसरः सदसि। उपविष्टमात्रः पाण्डित्यमात्मनः ख्यापयन् भगवता वादाय समुपचक्रमे। भगवांस्तस्यौद्धत्यं जानन्नपि "अभ्यस्तशास्त्रो नावमन्तव्य" इत्युदारतामात्मनः प्रकाशयन् प्रशमभरितैरेव वचनैः प्रमाणोपपत्तिपूर्वकैस्तस्याक्षेपमखिलं परिहृत्य स्वयं तम् अक्षरस्वरूपे पराभिमततत्त्वमस्यादिमहावाक्यार्थविचारे च अपरिहार्यान् कांश्चनाक्षेपान् प्रोक्त्वा "अत्र प्रतिविधीयतां यदि ते प्रतिभाबलम्" इत्यवोचत्। अथ निरुत्तरः सन् मौनीभूतमपि तं "पण्डितोऽयं नावमन्तव्य" इति मत्वा परमकारुणिको भगवान् दूरादुपस्थितोऽस्मत्सन्निधिमिति यथोचितं मानयित्वा विससर्ज। स प्रकृत्या दुरात्मा ईर्ष्यातिरेकेणाभिभूतः सदसो बहिर्निर्गत्य स्वगोष्ठ्यामात्मनः पाण्डित्यमेव प्रख्यापयन् श्रीस्वामिनारायणसम्प्रदायदूषणैकपराणि वचनानि यदा अवोचत्। तदा स्वेष्टदेवाभिमतस्वसिद्धान्तदूषणमसहमानो नित्यानन्दस्वामी-"अपात्रमेष माननस्य" इति विनिश्चित्य सपदि तमानाय्य महतीमनेकबुधजनभूयिष्ठां परमहंसमण्डलमण्डितां सभां कारयित्वा तत्र तस्य वेदान्ताचार्याभासतां प्रख्यापयन् वेदान्तविषयिणीं चर्चां समारेभे, तत्र स नित्यानन्दस्वामिना पराभिमताविद्यास्वरूप—तन्निवृत्ति—तदुपायेषु समाक्षिप्यमाणः, तस्य—श्रुतिस्मृतिशतनिशिततर्कशरानसङ्ख्यान् प्रवर्षतः पुरतः स्थातुमक्षमो निरुत्तरः सन् पराभूय ततः पलायाम्बभूव।

भगवता आचार्यपदेऽभिषिक्तैः श्रीमद्रघुवीराचार्यैरप्येष स्वामी सम्प्रदायसंरक्षणैकान्ते धर्मनिर्णये च स्वस्य प्रत्यनन्तरीकृतः धर्मज्ञानादिप्रचारापादनेन श्रीलक्ष्मीनारायणमन्दिरकार्यनिर्वहणे च परं व्यापृतो भूत्वा श्रीमदुद्धवसम्प्रदायस्य समुल्लासकः कमलवनस्येव हंसः कोऽप्येष परमहंसो व्यराजत।

सोऽयं नित्यानन्दस्वामी विज्ञानाध्वनीव मन्दिरनिर्वहणैकान्तव्यावहारिककर्मण्यपि व्यापृतः सेवां सम्प्रदायस्य परामकरोत्—

यदा भगवान् प्रकटपुरुषोत्तमः श्रीस्वामिनारायणः श्रीमदौद्धवसम्प्रदायनिर्वहणैकान्तो स्वीय आचार्यपदे विधाय द्वेधा देशविभागं स्वभ्रातृव्यौ श्रीमद्रघुवीरश्रीमदयोध्याप्रसादौ समतिष्ठापयत्। तदा निजविहितं सम्प्रदायसंरक्षणैकान्तमाचार्यप्रतिष्ठापनलक्षणं कर्म सतां हिततममवगमयन्, सन्निहितं नित्यानन्दमुनिमिदमाह— भोः स्वामिन्! अनयोराचार्यपदेऽस्मिन्नात्मीये यत् स्थापनमनुष्ठितमस्माभिः, तत् साधु समाचरितं नन्विति।

एवमभिहितः स्वामी नित्यानन्दमुनिः प्राह विहिताञ्जलिः—

" भगवन्! भवान् सर्वज्ञः, यद्भवान् करोति तन्नः कल्याणायैव। तत्–यत् कृतं साधु नाम तत्। तत्र का शङ्का नः! इमौ तु स्वतः सकलगुणसम्पन्नौ, अभिमतौ च भवता पुत्रभावेन। तावेतौ तमिमं सम्प्रदायं सम्प्रदायनिष्ठांश्चास्मान् समये समये हिताधानेन पालयिष्यत एव। सर्वेषां न आह्लादमापादयिष्यतश्च।

अपि च वयं भवतो दासानुदासाः, तत्–भवतः समादेशः सततं प्रणतेन शिरसा साभिनन्दनं स्वीकुर्महे " इति।

तदिदं स्वामिनो वचनं समुपश्रुत्य अत्यन्तं प्रसन्नो भूत्वा इदमाह भगवान्—

"अयमस्माभिः अस्मिन् वृत्तालयस्थाने आचार्यपदे समभिषिक्तो नाम, अथापि आचार्यपदमिदमनेकशिष्यजनसमादरणैकपात्रभूतं समयसमुचितसदुपदेशादिकार्यगौरवभूयिष्ठम्, नवश्चायमाचार्यपदे। तत्–वृत्तालयाचार्यपदे सम्पूर्णां श्रद्धामाधायास्याचार्यपदस्य यथा प्रतिष्ठा प्रतिदिनमभिवर्धेत तथा यत्नो विधेय " इति

तदिदं भगवतो वचनमनुदिनमनुस्मरता स्वामिना सत्सङ्गप्रतिष्ठासमभिवृद्ध्यै श्रीस्वामिनारायणप्रतिष्ठापिताचार्यपदस्य च महत्यै प्रतिष्ठायै अनुक्षणं दत्तावधानेन तदेकव्यापृतेन यावज्जीवं यद्यदनुष्ठितं महत्तरं कार्यम्, ये चान्तरायाः समुपनतास्तत्र तत्र, अविगणय्य तानन्तरायान् यद्यत् साधितं तद्वर्णयितुमिह न वयं पारयामः।

तदानीं समये नवमपीमं सम्प्रदायं धर्मज्ञानवैराग्यादितेजःपुञ्जेन जाज्वल्यमानं दृष्ट्वा तत्समयनिष्ठास्तेजसास्याभिभूयमानाः समुन्मिषदसूयावैरानुबन्धाः, येन केनाप्युपायेन समूलमेनं सम्प्रदायं समुच्छेत्तुं बद्धदृढाभिनिवेशाः ज्ञातिजनैः पण्डितैश्च कथमपि स्ववशीकृतैरस्य सम्प्रदायस्य द्रोहाय सततं समाहृतोद्योगाः समभूवन्।

परम्—श्रीमतः प्रकटपुरुषोत्तमस्य कृपाकटाक्षसमासादितप्रज्ञापराक्रमेण श्रीनित्यानन्दस्वामिना सर्वे ते वादाहवेषु निरस्ताः विगलितपाण्डित्यमदाः पादयोः प्रणमन्तः—

" जेता यः पण्डितानां जगति विवदतां देवताचार्यवक्ता "।

इत्यादिपद्योक्तेन प्रकारेण श्रीस्वामिनं स्तुवन्तः साक्षात् बृहस्पतिरेवायमिति सञ्जाताध्यवसायाः तद्वचनमेव प्रमाणतमममन्यन्त ।

भगवता श्रीमता प्रकटपुरुषोत्तमेनान्वहं सदसि समाश्रितान् सदुपदेशसुधारसान् पाययता यानि वचनामृतानि प्राकाश्यन्त, तानि तदा तदा मुक्तानन्दादयश्चत्वारः सद्गुरवः सङ्कलन्त आसन्। एष स्वामी श्रीनित्यानन्दमुनिः तेभ्यः सङ्ग्रहेभ्यः भगवतः श्रीस्वामिनारायणस्याशयमनुसृत्य सारतमं समादाय निबन्धरूपं वचनामृतं सन्नद्धीकृत्य श्रीशुकानन्दस्वामिभिर्विलेख्य सकलसज्जनसेव्यमकरोत्।

यदिदं सम्प्रदायेऽस्मिन् आध्यात्मिकशास्त्रेषु अग्रगण्यं सर्वतः श्रेष्ठतमं प्रथते। भगवान् श्रीहरिरपि समये समये सदसि समानाय्य निजमुखारविन्दविनिर्गतवचनामृतलक्षणां परां वाणीं श्रोतृनास्तिकाग्रेसरान् श्रावयन्नासीत्। तदिदं व्यक्तम्—सुधासिन्धौ लोयाप्रकरणे सप्तमतरङ्गे ।

दुर्गपुरे श्रीलक्ष्मीवाटिकायाम् भगवतः श्रीस्वामिनारायणस्य प्रकटपुरुषोत्तमस्य समवसितप्राकट्यप्रयोजनस्य अन्तर्धानमुपेयुषः समाधिस्थाने श्रीस्वामिना शिखरशोभासमलङ्कृतं मन्दिरं विधाय तत्र भगवतः श्रीहरेः पादुका प्रसादरूपतया स्वेन समुपलब्धा प्रतिष्ठापिताभूत्। अथ कालेन भूयसा धर्मधुरन्धराचार्यश्रीसमलङ्कृतैः श्रीविहारिलालमहाराजैः जीर्णोद्धरणक्रमेण सुमहोत्सवपूर्वकं घन-

श्यामनाम्ना ख्यायमाना श्रीहरेरर्चामूर्तिः श्रीमदिच्छाराममहाराज-श्रीमद्रघुवीरमहाराजमूर्तिभ्यां सह प्रतिष्ठापिता अद्य सकलसत्सङ्गिजनसंसेव्यमाना विराजते ।

श्रीमदौद्धवसम्प्रदायस्यास्य सर्वप्रकारेण सेवायां सोत्साहं सम्प्रवृत्तैरेतैः श्रीनित्यानन्दस्वामिभिः साहित्यसेवापि सर्वतः समुन्नता व्यधायि ।

तत्र शिक्षापत्र्या गुर्जरानुवादः सम्प्रदाये मान्यतमः समेधते।

अपरः श्रीहरिदिग्विजयनामा प्रसिद्धः प्रबन्धः संस्कृतवाङ्मयः काव्यरूपः, यत्र भगवतः श्रीहरेर्दिव्यचरितं सर्वेषामाह्लादावहं सरलगभीरया काव्यशैल्या समुपनिबद्धं दृश्यते । पारमैकान्तिकभगवज्जनविद्वज्जनसंसेव्यस्तत्त्वनिर्णयश्च यत्र सुनिरूपितो वर्तते। प्राधान्येन भगवतः श्रीहरेर्दिग्विजयप्रकारश्च निरूप्यते । सोऽयं निबन्धः पण्डितजनमनोरञ्जकः प्रथते सत्सम्प्रदायेऽस्मिन् ।

तृतीयम्-श्रीशाण्डिल्यप्रणीतभक्तिसूत्रभाष्यम् , यस्मिन् भक्तिस्वरूपविचारः, भजनीयस्य परमात्मनः स्वरूपस्वभावविचारः, एतदनुबन्धिनोऽपरेऽपि विचाराः शास्त्रीयाः प्रवर्तन्ते । निबन्धोऽयं पण्डितजनसंसेव्यः सन्दृश्यते ।

अपरे च प्रबन्धाः केचन गीर्वाणवाङ्मयाः केचन गुर्जरभाषामयाः-श्रीहरिकवचप्रभृतयः विदुरनीतिप्रभृतयश्च प्रथन्ते सम्प्रदायेऽस्मिन् सत्सङ्गिजनसमुपसेव्याः ।

अथ समवसिते साम्प्रदायिकसेवाभरे भगवतः श्रीहरेः स्वे धाम्न्यक्षरे निवसतः सेवायां समुत्सुकस्य स्वामिनो भौतिकं देहं परिजिहीर्षोः शरीरशैथिल्यापादकभूतः कोऽपि ज्वरावेशः समभूत् ।

तस्मिन्नवसरे श्रीगोपालानन्दस्वामिप्रभृतयः सर्वे सद्गुरवः सन्निहिता आसन् । आचार्यवर्यश्रीरघुवीराचार्या अपि सन्निधौ व्यराजन्। तदा प्रातरनुदिनमनुवाच्यमानायां श्रीसत्सङ्गिजीवनकथायां परिपूर्णायां श्रीरघुवीरमहाराजानुद्दिश्य सप्रणयमिदमूचुः श्रीस्वामिनः-

अस्माभिः श्रीहरेराज्ञया सम्प्रदायविरोधिनो वादिनः सर्वान्विनिर्जित्य सर्वं विरोधिवर्गं सम्प्रशमय्य सम्प्रदायेऽस्मिन् सत्सङ्गा-

ह्लादकारिणी प्रशान्तिः प्रतिष्ठापिता नाम। इतः परं सम्प्रदायनिर्वहाणां वः पुरतः कोऽप्यङ्गुलिमात्रमप्युन्नमयितुं न प्रभवति।

विहिता नाम साम्प्रदायिकी सर्वापि सेवा, इतः परं वयं ब्रह्म धाम जिगमिषन्तः श्रीहरेश्चरणकमलसंस्मरणपराः स्मः। ईदृशेऽप्यस्मिन्नवसरे भवतो हितमादधानाः किमपि ब्रूमः—

"सर्वेश्वरेण भगवता श्रीहरिणा श्रीमदाचार्यपदे भवन्तं प्रतिष्ठापयता सम्प्रदायहिताधाने कार्ये समर्पितो भवान्। तत् कदापि कस्यापि तिरस्कारो भवता नैव कार्यः। सत्यप्यपराधे उदारहृदयेन भूत्वा सर्वे भगवज्जना रञ्जनीयाः, हितमुपदिश्य स्वस्वधर्मे रक्षणीयाश्च। क्वचिदपि कार्ये अग्रयायी भूत्वा कस्याप्यप्रीतिपात्रं मा भूत् भवान्। सति कस्यचित् धर्मे प्रस्खलने साधून्वरिष्ठान् पञ्च पुरस्कृत्य सम्प्रदायानुरोधेन यथाशास्त्रं न्यायो विनिर्णेयः।

यदि कोऽपि किञ्चिदावेदयितुमागच्छेत् तदा दाक्षिण्यं मनसि निधाय श्रोतव्यं नाम तद्वचनम्। सत्यल्पेऽपराधे क्षमा विधेया" इति। इतीदं हिततममादेशं श्रीनित्यानन्दमुनेरुपश्रुत्य प्रहृष्टमनसोऽभूवन् श्रीमद्रघुवीरमहाराजाः।

तदानीं श्रीगोपालानन्दस्वामिभिर्विरचितम् ब्रह्मसूत्रभाष्यम्, ईशावास्याद्युपनिषद्भाष्यम्, श्रीशुकानन्दमुनिवरविरचितश्रीसत्सङ्गिजीवनप्रथमप्रकरणटीका, इत्येतत् पुस्तकजातमानाय्य श्रीस्वामिभ्यः प्रदर्शितम्। तदवलोक्य स्वामिनः सुप्रसन्ना अभवन्, ततस्तत्पुस्तकसमभ्यर्चनपूर्वकं श्रीस्वामिभिः उभौ तौ श्रीस्वामिनौ धन्यवादपुरःसरं सुश्लाघितौ।

अथैवं सर्वान् समादिश्य ब्रह्म धाम इयासुः सर्वेभ्योऽभ्यनुज्ञामादाय स्वान्तर्यामिणि श्रीहरौ समाहितमनसोऽभूवन् श्रीस्वामिचरणाः।

एवमुद्धवसम्प्रदायं समुल्लासयन् उपदिशंश्च धर्मरहस्यम्, अनुध्यायंश्चेष्टदेवं प्रकटपुरुषोत्तमं श्रीस्वामिनारायणम् परिसमाप्यास्मिन् धरातले कर्तव्यामौद्धवसम्प्रदायसेवां परेऽक्षरे धाम्नि विराजमानस्यास्यैव प्रकटपुरुषोत्तमस्य सेवां विधास्यन् अनुज्ञाप्य सर्वान्

परमहंसान्, अभिनन्द्य च सद्गुरुमण्डलम्, मूर्ध्न्याधायात्मनः प्राणं तमेवानुध्यानदृष्ट्या साक्षात्कुर्वन् परित्यज्य त्रिविधमपि शरीरं प्राप्य भागवतीं ततुं तेनैव भगवता पुरुषोत्तमेन तेजोमण्डलमध्ये भ्राजमानेनाधिष्ठिते विमाने समुपविश्य प्रापाक्षरं ब्रह्मपुरं धाम।

अथ सततमनुस्मरणीयचरणकमलानां श्रीस्वामिनां शारीरं वाचिकं मानसिकं चासाधारणं महिमानमिह लेशतो वर्णयामः—

शत्रूणामप्याह्लादावहं लावण्यम्, वादिनां सपदि परिभवावहं तेजः, देदीप्यमानेन ब्रह्मवर्चसा विराजमानविशालभालफलकम्, प्रफुल्लगौरकपोलयुगलम्, कमलदलसमाननयनयुगलम्, आजानुलम्बिबाहुयुगलम्, काषायशोभिकटितटम्, आश्रिततापत्रयोपशामकमन्दस्मितोपशोभितमुखारविन्दम्, सकलजनमनोनयनाह्लादकं वपुरनुपमं श्रीस्वामिनाम्।

सामुद्रिकलक्षणसम्पत्तिस्तु निरुपमवैभवानां कुले ख्यापयति जन्म। इतोऽन्यत् किमनुपमं वैभवम् ? यत्-ब्रह्मादिपदमप्येषां तृणायते।

अथ वाचो वैभवं वर्णयामः—

स्वरसम्पत्तिरतिगभीरमधुरा, वादिनां वाचां वीर्यमखिलं येषां वाग्विलासेष्वस्तमेति, यदीयवाग्वैभवे प्रसर्पति विदुषामपि जिह्वा सङ्कुचति। प्रसर्पति च येषां वाचः शुश्रूषुजनसमुपसेव्या सदुपदेशसुधालहरी।

अथ मानसिकं वैभवं सारतो वर्णयामः—

प्रकटपुरुषोत्तमो भगवान् श्रीहरिर्यस्य ज्ञानवैराग्यभक्तिप्रकर्षमवलोक्य परमप्रहृष्टः सत्सम्प्रदायसंरक्षणकर्मणि यमग्रगण्यं मेने।

जातु भगवान् निजमुखारविन्देन यदीयं वैराग्यपारम्यमुपवर्णितवान्—

" भोः सन्तः ! अवलोकयतास्य वैराग्यवैभवम् ! आकृत्या चक्रवर्तिलक्षणसम्पन्नोऽप्येष अवधूय भोगमखिलं युष्माभिः सर्वैः सह भिक्षान्नप्राशने समभिवृद्धसमुत्साहो वर्तते। तदिदमस्य वैराग्यमानन्दयत्यस्मान् " इति।

अथ च पारमैकान्तिकधर्मनिष्ठैर्विबुधैरस्य विज्ञानवाग्वैभवं प्रपश्यद्भिः व्यासोऽयमिति समुत्प्रेक्षन्ते। समुत्पश्यन्ति च श्रीकृष्णप्रादुर्भावसमये तदीयदिव्यचरितमुपवर्णयन् व्यास इवायं श्रीस्वामी प्रकटपुरुषोत्तमस्य श्रीहरेः क्षराक्षरातीतस्याक्षरनिलयस्य प्राकट्यसमये तदीयदिव्यचरितमुपवर्णयन् व्यासपदे विराजते कोऽपि नित्यमुक्ताग्रेसर इति।

नित्यानन्दमुनेरेतच्चरितं सद्गुरोर्महत्।

तत्तद्भाषानिबन्धेभ्यः सङ्गृह्य समनूदितम्॥

श्रीमद्भिः ज्ञानवैराग्यसम्पन्नैः श्लाघनीयसाधुचरितैः कृष्णस्वरूपदासैः, असक्तः समधिगतां विद्यां सफलयद्भिः पूर्वाचार्यविरचितनिबन्धसेवासमाचरणेन जीवितं च सार्थयद्भिः भक्तिसूत्रभाष्यस्य सटीकस्यास्य संशोधनकर्मणि प्रतिपदं दत्तावधानैः साहाय्यमस्माकं यद्व्यधायि, तदनुस्मरतां भाष्यस्यास्य गभीरसरलया भाषया तैर्विरचितं भाषानुवादं चावहितेन मनसा अनुवाचयतां नः कोऽप्यपूर्वः समाह्लादः समजनि।

पात्रे समर्पिता विद्या कस्य नाह्लादमावहेत्?।

किं बहुना? तेषामेषां ज्ञानवैराग्यसम्पदनुदिनमभिवर्धतामित्याशास्महे।

एम्बार–श्री कृष्णमाचार्यः (श्रीरङ्गम्)

वडताल—संस्कृतपाठशाला—प्रधानपण्डितः।

वडताल.





श्री स्वामिनारायणो विजयतेतराम् ।

# प्रस्तावना–

यः कर्मज्ञानवैराग्यनिर्मलीकृतमानसैः ।
ध्यानार्चनादिनिष्पन्नपरभक्त्यैव गृह्यते ॥
साध्यसाधनभेदेन या द्विधा भक्तिरुच्यते ।
तया सम्यक्प्रसन्नो यो ददात्यात्मानमप्यजः ॥
यः स्वयं स्वेच्छयैवापि पुराणः पुरुषोत्तमः ।
कृपया परयाविष्टः प्रादुर्भूतो भुवस्तले ॥
तं वन्दे सहजानन्दमिष्टदेवं परात्परम् ।
भक्तिधर्मात्मजं साक्षात्सर्वाविर्भावकारणम् ॥ १-४ ॥

કર્મ–સત્કર્મ, જ્ઞાન–દેહાત્મવિવેક અને વૈરાગ્યાદિક સાધનસમ્પત્તિથી સમ્યક્ પ્રકારે નિર્મળ કર્યું છે અન્તઃકરણ જેમણે એવા ભાગવત ભકતોએ, ધ્યાનાર્ચનાદિક સાધન ભકિતથી નિષ્પન્ન થયેલી પરા–પ્રેમલક્ષણા ભકિતથીજ જે–પરમાત્મા ગ્રહણ–સાક્ષાત્ કરાય છે. ॥

વળી–જે પરમાત્મા ભગવાન શ્રીહરિ સાધ્ય–સાધન ભેદથી જે બે પ્રકારની ભકિત કહેવાય છે, તે ભકિતથી–અખંડ ધ્યાનાર્ચનાદિક સાધન ભકિતથી સિદ્ધ થતી સાધ્ય–પ્રેમલક્ષણા ભકિતથી, સમ્યક્–પૂર્ણ પ્રસન્ન થઇને સ્વભકતોને પોતાની મૂર્તિ પણ આપી દે છે. ॥

જે સ્વયં સર્વ કારણના પણ કારણ પુરાણમૂર્તિ શ્રી પુરૂષોત્તમ ભગવાન પોતાની *સહજસિદ્ધ પરમ કૃપાના વશપણાને લીધેજ આ ભૂમંડળમાં પ્રાદુર્ભાવ પામેલા છે.* ॥

"अक्षरात्परतः परः" એમ સર્વથી પર જે અક્ષર, તેથી પણ જે પર–સ્વરૂપ, સ્વભાવ, વિભૂતિ, ઐશ્વર્ય વિગેરેથી સર્વોત્કૃષ્ટ છે, સર્વ આવિર્ભાવોના–અવતારોના જે સ્વયં કારણ–ધારક છે, તેજ આ લોકમાં ભકિત–ધર્મના પુત્રરૂપે વર્તતા એવા મારા ઇષ્ટ દેવ **શ્રી સહજાનન્દસ્વામીને** હું વન્દન કરૂં છું. ॥ ૧–૪ ॥

"*बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः ।*
मात्रार्थं च भवार्थं च ह्यात्मनेऽकल्पनाय च" ॥

જગન્નિયન્તા પ્રભુ શ્રીહરિએ પોતે સર્જેલા પ્રાણીઓ મધ્યે માનવ જાતિના પ્રાણીઓને પરમ કૃપા કરીને બુદ્ધિ, ઇન્દ્રિયો, મન અને પ્રાણ, એ વિગેરે કરણો–સાધનો **રચી** આપ્યાં છે, તે શા માટે ? તો–વિષયોનો પ્રકાશ થવા માટે, સંસારની અભિવૃદ્ધિ

भा-भगवदुपासनावलेन तमप्यतिलङ्घ्य स्वर्गादिलोकानेति । ततः सप्तर्षिलोकान् दृष्ट्वा ध्रुवलोकं प्राप्य महर्जनतपोलोकानतिक्रम्य सत्यलोकं प्राप्नोति । ततो भूम्यप्तेजोऽनिलाकाशाहंमहत्प्रकृत्याद्यावरणान्याविध्य प्राकृतं त्यक्त्वा दिव्यदेहेन दिव्याप्राकृतानन्तविभूति गोलोकं याति । तत्र ब्रह्मात्मना कृष्णं सेवते एवं क्रमोऽस्ति । एवं क्रमेण मुक्तिं गच्छतो भक्तस्य, लोकान्तरा-तेषु तेषु लोकेषु मध्ये तिष्ठतस्तत्तल्लोकैश्वर्यं भुञ्जानस्यापि । तदाप्तिः-तस्याः-परभक्तेराप्तिः-प्राप्तिर्भवति, न तु वैभवभोगासक्त्या तद्विघात इत्यर्थः ॥२-२-२५॥

अथ सद्योमुक्तिमाह—

## सू० उत्क्रान्तावेव तदभिधानात् ॥ २—२—२६ ॥

उत्क्रान्तिः—सूक्ष्मशरीरस्य स्थूलशरीराद्बहिर्भावः । ब्रह्मरन्ध्रं भित्त्वोत्क्रान्तस्य तस्य तदानीमेव तदभिधानात्—तस्य ब्रह्मधामगमनस्य ब्राह्मेण रूपेण विधानात् ॥ २-२-२६ ॥

---

त्यां भगवदुपासनाना बळथी ते सूर्य लोकने पण अतिलंघन करीने स्वर्गादिक लोकने पामेछे. त्यांथी उपर सप्तर्षिओना लोकने जोइने पछी ध्रुवना लोकने पामीने महर्लोक, जनलोक अने तपलोकने अतिक्रमण करीने सत्य लोकने पामे छे. ते पछी अनुक्रमे पृथ्वी, जळ, तेज, वायु, आकाश, अहंकार, महतत्त्व अने प्रकृति, ए आदिक आठ आवरणोने भेदीने प्राकृत-प्रकृतिना कार्यने तजी दइने दिव्य अप्राकृत भागवती तनुथी दिव्य अप्राकृत एवी अनन्त विभूतिओथी संम्पन्न एवा गोलोक धामने पामेछे ते धाममां ब्रह्मस्वरूपे रहीने परब्रह्म कृष्णने सेवेछे-अनुभवेछे. आ प्रमाणे अनुक्रम छे। आ प्रमाणे क्रमथी मुक्तिने पामता भकतने मध्येना लोकमां-ते ते लोकोमां मध्ये रहेतां अने ते ते लोकोनां ऐश्वर्य भोगवतां पण, तदाप्तिः-ते परा भक्तिनी प्राप्ति थायछे, परंतु नहि के वैभव भोगववामां आसकत थवाथी तेनो विघात थायछे, ए अर्थ छे. ॥ २-२-२५ ॥

हवे-सद्योमुक्ति-साक्षात् मुक्ति कहेछे—

**उत्क्रान्ति समयमांज तेनुं अभिधान (विधान) छे माटे. ॥ २-२-२६ ॥**

उत्क्रान्ति- सूक्ष्म शरीरनो स्थूळ शरीरथी बहिर्भाव थवो ते। ब्रह्मरंध्रने भेदीने शरीरथी नीकळेला ते उपासकने तेसमयमांज ते कहेलुं छे माटे-ते मुकतने ब्रह्मधाममां जवुं तेनुं ब्रह्ममय रूपथी विधान छे-कहेवामां आव्युं छे माटे. ॥ २-२-२६ ॥

ननु-शंका निन्द्य योनिमां जन्मेला चंडाळ सुधीनाने पण जो अधिकार होय, तो निन्द्य योनिमां जन्मेला चंडाळादिकना जेवा आचरणवाळाने पण भकितमां अधिकार

टी—सद्य इति । विना लोकान्तरनिवासव्यवधानम् । क्रमादिति । उत्तरोत्तराभ्यर्हितलोकसङ्क्रमणक्रमात् । यद्यपि प्रारब्धावशेषे सति न सद्यो भवति । अथापि स नोत्तरोत्तरमभ्यर्हितलोकसङ्क्रमणप्रापकः । प्रारब्धावशेषश्च न परां भक्तिमापन्नानां घटेत । तदयं विभागः आनिष्पन्नपरभक्तीनामभिमुखीभूतपरमभक्तिपरिपाकानाम् भक्तिप्रभावसम्भूतोत्तरोत्तराभ्यर्हितलोकारोहणतत्तल्लोकनिवासलक्षणव्यवस्थया । तत्तदैश्वर्यं भुञ्जानस्येति । भगवद्विभूतिभावेनानुभवत इत्येतत् । "क्रमे तु लोकान्तरप्राप्ति" रिति केषांचित् सूत्रपाठः । अस्मिन् पाठेऽयमर्थः ये नाम भगवतः परिपूर्णस्य वासुदेवस्य साक्षादुपासकाः, परया भक्त्या निष्पन्नया भगवतो वासुदेवस्य लोकं प्राप्य परब्रह्मामृतानुभवनिमग्ना भवन्ति । ये तु सङ्कर्षणादिकं व्यूहभेदं भगवतो वासुदेवस्योपासते, ते तु भक्तास्तद्गतया परमभक्त्या तद्व्यूहभेदं तत्तल्लोके प्राप्य क्रमेण निष्पन्नया परिपूर्णे भगवति वासुदेवे परया भक्त्या तत्सालोक्यतत्सारूप्यतत्सायुज्यलक्षणं मुक्तैश्वर्यमनुभवन्तीति सेयं क्रममुक्तिः । शब्दार्थश्चेत्थम्-क्रमे तु-व्यूहोपासनकृते क्रमप्रसङ्गे तु, लोकान्तराणाम्-भगवत एव लोकान्तराणां सङ्कर्षणादिलोकानां *प्राप्तिरिति । "क्रमैकगत्युपपत्तेस्तु" इत्यस्मिन् पाठेऽप्ययं भावः ।* शब्दार्थश्चेत्थम्-या कचित् क्रमेण भगवतो वासुदेवस्य प्राप्तिरुच्यते । या च कचित् एकाक्रमशून्या-साक्षादेव तत्प्राप्तिरुच्यते, तद्गतिद्वयमप्यविरोधेनोपपद्यते । अतो नाशङ्कावकाश इति ॥ २-२-२५ ॥

सद्य इति । तत्तल्लोकगमनक्रमकृतविलम्बं विनेत्यर्थः ॥

सूक्ष्मशरीरस्येति सूक्ष्मं शरीरं यस्येत्यर्थः । सूक्ष्मशरीरविशिष्टः सन्नुत्क्रामतीत्येतत् । उत्क्रान्तिप्रकारमाह-ब्रह्मेति । " तासां मूर्धानमभिनि सृतैका तयोर्ध्वमायन्नमृतत्वमेति " इत्युक्तक्रमेण मूर्धन्यया नाड्या निष्क्रामतीत्येतत् । तदानीमेवेति । विना विलम्बम् । ब्रह्मधामगमनस्येति । तथा च श्रूयते-" तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये " । " धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि " । " स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते " इति ॥ २-२-२६ ॥

आनिन्द्ययोनि-आचण्डालम् । अविशेषात्-अनधिकारापादकस्य पापातिशयस्याभावात् । एकस्य शरीरं पापपरिणतिः, अपरस्य चरितं पापरूपम् । किमितोऽनिष्टम् ? । आह-महापातकिनामपीति । येषां देहान्तं प्रायश्चित्तं तेषां कथं स्यादधिकार इत्याशयः ॥

आर्तौ जातायामिति । अत्यन्तनिर्वेदे जाते सतीत्यर्थः । ननु—कथमार्तौ जातायां वा महापातकिनः *प्रायश्चित्तविधुरस्य स्यादधिकारः* । इदमेव हि प्रायश्चित्तम्-यत् कीर्तनस्मरणाद्यनवरतमाधीयमानं भक्तिरूपम् । इदमेव चार्त्तानधिकारिणोऽधिकृत्य विधीयते । *अयमपि ह्यार्त्तं एव यत्कृष्टो* वर्णधर्मलक्षणसम्पत्तेः । सर्वप्रायश्चित्तानामपि कार्यं स्वयमेव साधयितुं प्रभवति; चेयं कीर्तनादिलक्षणभक्तिरित्युक्तं प्राक् । सेयमेव भक्तिः प्रणाश्य सर्वं पातकं *प्रेमातिशयलक्षणतयान्वहमनुवर्धमाना परभक्तये* च भवति । तदस्त्येवाधिकारो भगवद्भक्तौ महापातकिनामपि । अत एव स्मर्यते—

भा–ननु–आनिन्द्ययोन्याधिकारश्चेदानिन्द्यचरितमप्यधिकारः स्यात्। अविशेषात्, तथा सति महापातकिनामपि स्यादधिकार इत्यत्राह–महेति ॥

सू० महापातकिनामप्यार्त्तावधिकारः ॥२–२–२७॥

ब्रह्महत्या, सुरापानं, स्वर्णस्तेयं, गुरुतल्पगमनं, तद्वतां संसर्गश्चेति महापातकानि, तद्वतामप्यार्त्तौ जातायामस्ति भक्तावधिकारः ॥ २-२–२७ ॥

ननु—कुत्रचिदेकान्तधर्मः, कुत्रचिद्भक्तिरित्युभेऽपि मोक्षसाधनत्त्वेन प्राप्ते किं तयोरेक एवार्थः ? पृथगर्थौ वेत्याशङ्क्याह–तद्द्वयमपीति ॥

सू० तद्द्वयमपि सा, गीतार्थप्रत्यभिज्ञानात् ॥२–२–२८॥

तद्द्वयमपि—यदेकान्तधर्मशब्देन निर्दिश्यते, यच भक्तिशब्देन निर्दिश्यते तद्द्वयमपि, सा–परैव भक्तिः, कस्मात्? गीतार्थप्रत्यभिज्ञानात्। गीतार्थः—"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!" इत्यादिवचनार्थः। तस्य प्रत्याभिज्ञानात्–"नूनमेकान्तधर्मोऽयं

---

હોયજ, બન્નેમાં તફાવત નથી માટે અને એ રીતે તો મહાપાતકીઓને પણ અધિકાર પ્રાપ્ત થાયજ, એ શંકાના સમાધાનમાં કહે છે—

મહાપાતકીઓને પણ આર્તિ–અત્યન્ત નિર્વેદ થાય તો ભકિતમાં અધિકાર છેજ. ॥ ૨–૨–૨૭ ॥

બ્રહ્મહત્યા, સુરાપાન, સ્વર્ણની ચોરી, ગુરૂતલ્પગમન અને એ મહાપાતકીનો સંસર્ગ, એ પાંચ મહાપાતકવાળાઓને પણ આર્તિ–પશ્ચાત્તાપપૂર્વક અતિ દીનભાવ સાથે અત્યન્ત નિર્વેદ થયે સતે તો ભકિતમાં અધિકાર છેજ. ॥ ૨–૨–૨૭ ॥

નનુ—શંકા, ક્યાંઇક એકાંતિક ધર્મ, ક્યાંઇક ભકિત, એમ એ બંનેને મોક્ષના સાધન તરીકે માનવાનું નિશ્ચિત થવાથી, શું તે બન્નેનો એકજ અર્થ છે? કે પૃથક પૃથક છે? એમ આશંકા ઉઠાવીને કહે છે—

તે બન્ને પણ પરા ભકિતજ છે, ગીતામાં કહેલા અર્થનું પ્રત્યભિજ્ઞાન છે માટે. ॥ ૨–૨–૨૮ ॥

તે બન્નેય પણ—જે એકાન્તધર્મ શબ્દથી કહેવામાં આવ્યો છે અને જે ભકિત શબ્દથી કહેવાય છે તે બન્ને પણ તે પરા ભકિતજ છે. । શાથી ? તો કે–ગીતામાં કહેલા અર્થનું પ્રત્યભિજ્ઞાન છે માટે. ।

भा-श्रेष्ठो नारायणप्रियः" । इत्यनेन नारायणीयेन एकान्तधर्म इति निर्देशेनैव प्रत्यभिज्ञानात्, सैवेयमिति प्रत्यभिज्ञानात् ।

यद्वा-गीतार्थस्य-गीतायामभिहितस्य परभक्त्यभिख्यस्यार्थस्य नारायणीये-"केनैष धर्मः कथित" इति पृष्टे-"समुपोढेष्वनीकेषु कुरुपाण्डवसेनयोः । अर्जुने विमनस्के वै गीता भगवता स्वय" मित्यादिनोत्तरयता प्रत्यभिज्ञानात्-प्रत्यभिज्ञापनात् ॥ २—२—२८ ॥

परां भक्तिं कृत्वैव भगवन्तं प्राप्नोतीत्याह-परामिति ॥

---

टी-"अपि चेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति" ॥ इति ॥ २-२-२७ ॥

कुत्रचिदिति । केषुचिन्मुमुक्षूनधिकृत्य प्रवृत्तेषूपदेशेष्वार्षेषु । एकान्तधर्मः, मोक्षसाधनतयोपदिष्ट इति शेषः । कुत्रचिद्भक्तिः, भक्तिरुपदिष्टेति शेषः । उभेऽपि-एकान्तधर्मो, भक्तिश्चेत्युभे । मोक्षसाधनत्वेन प्राप्ते-स्वस्वविधायकवचनबलात् । किं तयोरेक एवार्थः? पृथगर्थौ वेति । तयोः-एकान्तधर्मशब्दभक्तिशब्दयोः । भिन्नार्थकता चेत्यर्थः । यद्यर्थभेदस्तर्हि तयोः किं समुच्चयः ? उत विकल्पः, ? विकल्पे सति किं नियतविकल्पः ? उतानियतविकल्प ? इत्याशङ्काशयः ॥

एकान्तधर्म इति निर्देशेनैवेति । अनन्यशब्दसमानार्थको ह्येकान्तशब्दः । तत्प्रत्यभिज्ञायते-अनन्या भक्तिरेकान्तधर्म इति । सैवेयमनन्या भक्तिर्भक्तिरिति च व्यपदिश्यते इति भावः । प्रत्यभिज्ञाननिमित्तेऽस्मिन्नरुच्या प्रकारान्तरेण व्याचष्टे-यद्वेति ॥ २-२-२८ ॥

---

ગીતામાં કહેલો અર્થ એટલે-"હે અર્જુન ! અનન્ય-એકાન્તિકી ભક્તિથી તો હું આ પ્રમાણે જોવા જાણવામાં શક્ય છું." । એ આદિક વચનોનો અર્થ જાણવો. । અને તેનું પ્રત્યભિજ્ઞાન એટલે-"નિશ્ચેજ આ એકાન્તિક ધર્મ શ્રેષ્ઠ-સર્વોત્તમ છે. અને તેથીજ નારાયણને અત્યન્ત પ્રિયછે." । એ રીતે આ નારાયણને પ્રિય હોવાપણે એકાન્તધર્મ એવા નિર્દેશથીજ પ્રત્યભિજ્ઞાન છે માટે. એટલે કે-તેજ આ પરા ભક્તિ છે એમ જણાવવામાં આવ્યું છે માટે. ।

અથવા-ગીતાર્થનું એટલે ગીતામાં કહેલા પરા ભક્તિ નામે અર્થનું, નારાયણીયાખ્યાનમાં-"કોણે આ ધર્મ કહ્યો છે ?" આમ પૂછતાં "કુરૂ-પાંડવોની સેનાઓના સમૂહો લડવા તૈયાર થઈ ગયા તે વખતે અર્જુન વિમનસ્ક-ઉદાસ થતાં સ્વયં ભગવાનેજ કહેલા છે." ઈત્યાદિક વચનોથી ઉત્તર આપનારાએ જણાવ્યા છે માટે. ॥ ૨-૨-૨૮ ॥

પરા—પ્રેમલક્ષણા ભક્તિ કરીનેજ ભગવાનને પામેછે એમ કહેછે—

सू० परां कृत्वैव, तथा ह्याह भगवान्. ॥ २-२-२९ ॥

इति श्रीभक्तिमीमांसाशास्त्रस्य श्रीशाण्डिल्यमुनिप्रणीतस्य भक्तिसूत्रस्य द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २-२ ॥

पराम्-अत्यर्थानन्यप्रेमलक्षणां मुख्यां भक्तिं कृत्वैव-प्राप्यैवेत्येतत्। भगवन्तं प्राप्नोति। तथा ह्याह भगवान्—" भक्त्या मामभिजानाति यावान् यश्चास्मि यादृशः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्"मिति। भक्त्या-परया भक्त्या। ज्ञात्वा तदनन्तरम् ततो हेतोः—तस्या एव पराया भक्तेर्हेतोर्विशते—प्राप्नोति माम् ॥ २—२—२९ ॥

इति श्रीपरभक्तिसमाराध्यभगवत्सहजानन्दपरमानुग्रहपात्रभूत-सकलविद्वज्जनसाधुजनपूजित-सद्गुरुवर्य श्रीनित्यानन्दमुनि-विरचिते श्रीशाण्डिल्यसूत्रभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २—२ ॥

समाप्तो द्वितीयोऽध्यायः ॥ २ ॥

---

પરા ભક્તિ કરીનેજ ( પામેછે ) તે પ્રમાણેજ ભગવાને કહ્યું છે. ॥૨-૨-૨૯॥

ઇતિ શ્રીભક્તિમીમાંસાશાસ્ત્રરૂપ શ્રીશાણ્ડિલ્યમુનિપ્રણીત ભક્તિસૂત્રના દ્વિતીયાધ્યાયનું દ્વિતીય આહ્નિક સમ્પૂર્ણ થયું. ॥ ૨-૨ ॥

પરા—અત્યન્ત અનન્ય પ્રેમલક્ષણા એવી મુખ્ય ભક્તિ કરીનેજ—અરી રીતે પામીનેજ, ભગવાનને પામેછે. તેજ પ્રમાણે ભગવાન કહે છે—" હું જેવડો, જે અને જેવો છું, તેવો તો મને ભક્તિથીજ ખરેખરો જાણે છે અને જાણીને તે પછી તે પરા ભક્તિને લીધેજ મારા પ્રત્યે પ્રવેશ કરેછે—એટલે કે મનેજ પામેછે. "। ભક્તિથી—પરા ભક્તિથી, જાણીને તે પછી તે હેતુથી—તેજ પરા ભક્તિને લીધે, પ્રવેશેછે—મનેજ પામેછે ॥ ૨-૨-૨૯ ॥

ઇતિ શ્રી પરભક્તિસમારાધ્યભગવત્સહજાનન્દપરમાનુગ્રહપાત્રભૂત—સકળવિદ્વજ્જનસાધુજનપૂજીત-સદ્ગુરુવર્ય શ્રીનિત્યાનન્દમુનિ-વિરચિતે શ્રી શાણ્ડિલ્યસૂત્રભાષ્યે દ્વિતીયાધ્યાયસ્ય દ્વિતીયમાહ્નિકં સમાપ્તમ્ ॥ ૨-૨ ॥

સમાપ્તો દ્વિતીયોઽધ્યાયઃ ॥ ૨ ॥

टी–परां भक्तिं कृत्वैवेति । परभक्तिसम्पत्त्यैवेत्येतत् । एतेन-भगवतः स्मरणकीर्त्तनादेस्तत्त्वतस्तत्स्वरूपज्ञानादेश्च क्वचित्स्वातन्त्र्येण साधनत्वं किं ? न स्यादिति शङ्कापाक्रियते ॥

अत्यर्थानन्येति । अर्थमभिधेयमनिक्रम्य वर्त्तमानमत्यर्थम्, वाचामगोचरम् । अनन्येति । यस्मिन् प्रेमपरिपाके भगवत्स्वरूपात्प्रियतमादन्यस्य नोपश्लेषः । यस्मिन्नुत्कटरागे स्थितः प्रियतमादन्यत्र वेद नात्मानमपि, सोऽयमुत्कटानुरागः - अत्यर्थानन्यप्रेमलक्षणा परा भक्तिरुच्यते । अक्रियात्वेन कृत्यनन्वयादाह-प्राप्येत्येतदिति अवधारणादन्येषां भगवत्प्राप्तौ साक्षात्साधनत्वं व्यवच्छिद्यते । अव्यवहितपूर्ववचनपरामर्शनार्थमाह-परया भक्त्येति । इदं ह्यव्यवहितं वचनम्-" समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् " इति । अनया च परया भक्त्या भगवत्स्वरूपयाथात्म्यविज्ञानम् तत्पूर्वकं तत्प्राप्तिश्च । नान्यत्तत्प्रवेशे साक्षात्साधनम् इत्युक्तं भवति । " भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! " । इत्यनेनैकार्थ्यं चास्य । प्रवेशेऽप्यनन्यभक्तेरेव हि साधनत्वं तेनाप्युच्यते । अनन्ययैकभक्त्या तत्त्वतो जानाति प्रविशति चेत्यस्मिन् श्लोके, अनन्ययैव भक्त्या ज्ञातुं शक्यः प्रवेष्टुं च शक्य इति तस्मिन् श्लोके । तद्भगवतो हार्दमेतत्-यत्परा भक्तिरेव प्रधानं साधनं भगवत्प्राप्ताविति ॥

प्रसङ्गादिह किञ्चिद्विचार्यते-पारमैकान्तिको धर्मः प्रपत्तिरिति तत्र तत्रोच्यते, भक्तिरपि पारमैकान्तिको धर्म इति । कथमयं द्विधा वादः ? उच्यते-अनध्यस्तसाधनभावा फलत्वेन रस्यतमा भक्तिरेव तु पारमैकान्तिको धर्म उच्यते, तन्निष्ठाश्च प्रपत्तिनिष्ठा एव । प्रपन्नस्यैव तु भक्तिः स्वादुतमा भवति ।

इदमिह प्रपत्तितत्त्वं बोध्यम्–

यः पुनरसहमानस्तापत्रयाभिघातं, परमानन्दसागरं परमपुरुषलक्षणममृतमयमवगाढुमभिधावन्मार्गमाणो मार्गं, दूरादालक्षयन् प्रणिधानलक्षणमेकं पन्थानं मुमुक्षुभिरनेकैरुपसेव्यमानम् । तत्र च कर्मयोगज्ञानयोगभक्तियोगैरुत्तरोत्तरमलघुभिः पथविभागैः पूर्वपूर्वसापेक्षैरतिगहने द्राघीयसि आत्मनोऽनधिकारमाकलय्य, सन्निहितं सर्वस्य, सपदि सर्वसन्तापहरं, प्रच्छायशीतलं, प्राप्यादानन्दसागरादमृतमयादविलक्षणम्, स्वाभाविकशेषत्वरासिक्यानुगुणभाग्यविशेषेण सञ्जातरुचिभिः स्वाम्याज्ञानुवर्त्तनैकशीलतया प्रतिकूलतो निवृत्तैः, प्रवृत्तैश्चानुकूल्यसङ्कल्पे, महाविश्वासपूर्वकमात्मनस्स्वामिनं सर्वज्ञं सर्वशक्तं सत्यसङ्कल्पं वात्सल्यादिसकलकल्याणगुणगणपरिपूर्णं परमपुरुषं भगवन्तं वासुदेवं शरणमुपगतैरुपसेवितमात्मनोऽनुरूपं पन्थानमवधार्य, परित्यक्ताखिलारम्भः, कोटिद्वयलग्नदहनेन्धनान्तरस्थो विस्फुरन्निव कीटको, मध्ये मरणजन्मनोरत्यन्तं भीतभीतः, स्वस्वामिनो वदान्यस्य श्रीमन्नारायणस्य वात्सल्यादिकमनुस्मरंस्तमुपधावति मातरमिव वत्सः, तस्यायं मुक्तौ पन्थाः प्रपत्तिशब्दैस्तत्र तत्र प्रतिपाद्यते ।

प्रपत्तिर्नामाश्रयणविशेषः, स चोपायतयाश्रयणम् । यदि निष्कृष्य निरूप्यते तदा आत्मनः परित्राणे कामपि गतिमलभमानेन वात्सल्यादिगुणसागरस्य पुरुषो-

टी-तमस्य सन्निधौ क्रियमाणा "त्वमेवोपायभूतो मे भवे"ति प्रार्थना प्रपत्तिरित्युक्तं भवति। इयमेव शरणागतिरित्युच्यते, तथा च वचनम्-

"अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः"॥

अत्र वचने प्रपत्तिः शरणागतिरिति पर्यायपाठः। "तदेकोपायतायाच्ञा" इति प्रपत्तिस्वरूपमुक्तम्। वचनान्तरं च-

"अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः।
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः।
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम्" इति।

तथा च प्रार्थनाविशेषः प्रपत्तिरित्युक्तं भवति। अनेन प्रार्थनाविशेषेण नियतो भरन्यासः। भरन्यासो नाम-समर्थोऽहमिदमनेन साधयामीति स्वातन्त्र्याभिमानेन स्वशिरस्यारोपितस्य भरस्य स्वस्याकिञ्चन्यादिकमनुसन्धाय "त्वमेवोपायभूतो मे भवे"ति प्रार्थनापूर्वकम्-

"तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः"।

इत्युक्तरीत्या परस्मिन्नर्पणम्। अत एव शरणागतिस्वरूपनिरूपणाय प्रवृत्ते-

"गोप्तृत्ववरणं तथा"।
"आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः"।

इति वचने आत्मनिक्षेपोऽपि गृहीतः। न्यास एव आत्मनिक्षेपः।

"आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" इति वचनेन व्यक्तम् ज्ञापितः।

इत्थञ्च प्रपत्तेः प्रार्थनापूर्वकात्मनिक्षेपरूपत्वात् विशेषणांशादरेण शरणागतिशब्दः, विशेष्यांशादरेण न्यासशब्दश्च प्रयुज्यते। सिद्धमेतावता-प्रपत्तिन्यासशरणागतिशब्दानां पर्यायत्वम्।

अत एव "निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः।
प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृता" मिति स्मर्यते।

अनेन वचनेन अङ्गसम्बन्धो विज्ञायते। विवेचयन्ति चाङ्गविशेषान् वचनानि-

"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।
प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता॥
विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा"॥ इत्यादीनि॥

आनुकूल्यस्य सङ्कल्पः—योऽयमनेनोपायतया आश्रितस्तदनुवर्तने सङ्कल्पः। न ह्यगतिकस्य स्वशरण्यानुवर्तनादनुकूलमन्यदिह विद्यते। यमसौ शरणमुपयाति तस्य सेवायां निरतेन भाव्यमित्युक्तं भवति।

प्रातिकूल्यस्य वर्जनम्-तदनभिमततो निवृत्तिः। एतेन भगवन्तं शरणं गच्छता भगवदाज्ञानुरूपशास्त्रदृष्टेषु निषेधतो निवृत्तेन, विहितेषु यथायोग्यं कैङ्कर्यवृत्त्यान्वितेन च भाव्यम्। अन्यथा तदाज्ञानुवर्तनासिद्ध्या प्रपत्तिभङ्गस्स्यादिति सिद्धम्॥

टी-रक्षिष्यतीति विश्वासः—स्वस्याघभूयस्त्वमभिलषितपरमपुरुषार्थगौरवञ्चानुस्मृत्य स्यान्नाम संशयः-"कथमयं मां रक्षे"दिति। एवं सति उपायतश्चयवेदयम्, तदपेक्षते महाविश्वासः-"अयं नः स्वामी वत्सलः परमोदारो रक्षिष्यत्येव माम्"इति॥ गोप्तृत्ववरणम्-"त्वमेवोपायभूतो मे भवे"ति प्रार्थना। परमोदारोऽपि परमपुरुषो यद्यसौ चेतनो न प्रार्थयेत कथमयं स्वयमेवोपायो भूत्वा परमपुरुषार्थं प्रयच्छेत्। यो यो यद्यत्कामयते साक्षात्परम्परया वा तत्तद्वितरणे खलु सङ्कल्पो भगवतः, दातुश्चायमेव स्वभावः समुचितः, न हि किराती गुञ्जापुञ्जेनेव रत्नेन राजार्हेणापि तृप्यति। तत् तस्यै तद्वितरणं दातुरनभिज्ञतामेव ज्ञापयेत्, तदवश्यमपेक्ष्यते प्रार्थना। अन्यथा लोकमर्यादाभङ्गश्च, अत एव वचनम्-" रक्षापेक्षां प्रतीक्षते" इति॥

आत्मनिक्षेपः-व्याख्यातोऽयम्॥

कार्पण्यम्-दैन्यम्, आकिञ्चन्यमिति यावत्। यावदुपायान्तरेष्वन्वयः स्यादस्य तावदस्य उपायसिद्धिर्न स्यात्। अकिञ्चनानामेव ह्ययं पन्थाः। "षड्विधा शरणागति" रितिशब्दात् शरणागतौ प्रकारभेदः षोढेति न भ्रमितव्यम्। किन्तु-अङ्गाङ्गिभावो बोध्यः। आनुकूल्यसङ्कल्पाद्यङ्गपञ्चकयुक्ता निक्षेपरूपा शरणागतिरिति। अत एव वचनम्-

" कृतानुकूल्यसङ्कल्पः प्रातिकूल्यं विवर्जयन्॥
विश्वासशाली कृपणः प्रार्थयन् रक्षणं प्रति।
आत्मानं निक्षिपति यत् विप्रदेवस्य पादयोः। सा प्रपत्तिः "॥ इति।

एवमेवंभूतः सन्नात्मानं निक्षिपति यत्, सा प्रपत्तिरिति निर्देशादङ्गाङ्गिभावो विज्ञायते॥

ननु-स्यात्प्रपत्तिरुक्तलक्षणा काचित्, स्यादपि साधनता तस्या लघुषु फलेषु केषुचित्प्राकृतेषु। मद्धत्तरे परमपुरुषार्थे मोक्षे तस्याः साधनभावे किं प्रमाणम्?

इदम्-" यद्येन कामकामेन नासाध्यं साधनान्तरैः।
मुमुक्षुणा यत्साङ्ख्येन योगेन न च भक्तितः।
प्राप्यते परमं धाम यतो नावर्त्तते पुनः।
तेन तेनाप्यते तत्तन्न्यासेनैव महामुने!।
परमात्मा च तेनैव साध्यते पुरुषोत्तमः।
कृतान्यनेन सर्वाणि तपांसि तपतां वर!।
सर्वे तीर्थाः सर्वयज्ञाः सर्वदानानि च क्षणात्।
कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः॥
यानि निःश्रेयसार्थानि नोदितानि तपांसि वै।
तेषां तु तपसां न्यासमतिरिक्तं तपः श्रुतम् "॥ इति॥

ननु-कथमयं चिरकालार्जितपुण्यपापसञ्चयः शास्त्रदृष्टतत्परिहरणोपायमननुष्ठाय प्रार्थनामात्रेण लघुनोपायेन कर्मयोगादिभिर्गुरुभिरपि दुस्तरं संसारसागरमचिरेण समुत्तरेत्।

टी-ननु-वचनानि निदर्शितानि। सत्यम्, न तानि स्वार्थे प्रभवन्ति, अर्थवादतया सावकाशानि नाम। हन्त गुरुभारवहनकार्कश्यम्? यद्बाधितेऽप्यर्थेऽर्थवादताश्रयणम्॥

अभ्यस्तशास्त्रभाराणां प्राणानायस्य केवलम्।
कर्षतां कचिदात्मानमव्यक्ते गहने पदे॥

अज्ञातभगवत्प्रेमरससर्वस्वसम्पदाम्।
अबाधितोऽप्यर्थवादः कृषीवलसधर्मणाम्॥

केनास्यार्थस्य बाधः? ननु-न्यायेनैव, न ह्यतिलघीयसा महत्तरं फलमुपपद्येत। लघीयसा दानादिना न किं? महत्तरं पारलौकिकं स्वर्गादि। परस्सहस्राणि ईदृशानि फलतोऽतिलघिष्ठानि श्रूयन्ते स्मर्यन्ते च॥

ननु—"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिगुरुतरसाधनविषय एव स्वयमवकाशमलभमाना निदर्शितवचनानां वाच्यार्थं बाधन्ते। सत्यम्, अवकाशं यदि न लभेरन बाधेरन्नाम। अस्त्येवावकाशः शक्तेषु। ये नाम ध्यानयोगनिष्पत्तितः प्राक्सम्भाव्यमानं कालदैर्घ्यं, मध्ये सम्भाव्यमानप्रस्खलनादिक्लेशं, पश्चादवर्जनीयप्रारब्धफलभोगोपधायकसम्भाव्यमानानेकजन्मविलम्बं च सोढुं शक्नुवन्ति ते तु शक्ताः। ये पुनरात्मनः परमात्मनो नवविधं सम्बन्धमनुस्मृत्य क्षणमपि तद्विरहमसहमानास्तद्गुणानुस्मरणमात्रेण प्रशिथिलसर्वगात्रास्तत्संश्लेषैकजीवितास्ते ह्यशक्ताः। तदेवं शक्ताशक्तविभागेन नोपमर्दो मिथो गुरुलघुपक्षयोरनयोः। क्लिष्टेऽपि कस्यचित्प्रवृत्तिः, सरले तु नेत्यत्र तु रुचिवैचित्र्यमेव नियामकम्, तत्र च सुकृततारतम्यम्।

ननु-"नान्यः पन्था अयनाय विद्यते" इति वेदनादन्यस्य साधनता हि बाध्यते। सत्यम्, वेदनविशेष एव प्रपत्तिः। "स एवोपायभूत" इति दृढाध्यवसायरूपा हि सा। उपायत्वप्रार्थनापि तन्मूलका तद्वितातिरेव। न्यासोऽपि सर्वस्यात्मात्मीयभरस्य तदीयत्वाध्यवसाय एव। वस्तुतो-"नान्यः पन्था अयनाय विद्यते" इत्यत्र अन्यसम्बन्धितया न वेदनं गृह्यते, किन्तु-"तमेवं विद्वानमृत इह भवती" त्यत्र तच्छब्देन प्रस्तुतः परमपुरुष एव, तस्यैव मुख्यमुपायत्वम्। सेतुशब्देनाप्यन्यत्र श्रुतेः। अन्यशब्दप्रतिसम्बन्धिता वेदन एव चेत् स्वरसगतिका, एवं वेदन एव सा स्वरसगतिकतरेति विद्याभेदस्य विलयप्रसङ्गः। किञ्च-शास्त्रदृष्टानामुपायान्तराणां फलसाधनत्वं कथमिति पर्यालोचनीयम्। न ह्यनपेक्ष्य कञ्चित्सर्वज्ञं सर्वशक्तं फलदं स्वयमेव फलं साधयति, तेषां जडत्वेन तदसामर्थ्यात्। यच्चेहानुष्ठीयमान उपायोऽपूर्वं किञ्चिदुत्पाद्य तद्द्वारा पारलौकिकं फलं साधयतीति तु परेषां समयः। अदं च न त्र्यन्तनिष्णातानामभिमतः, सर्वस्य परमपुरुषप्रीणनद्वारा हि फले उपयोगस्तदभिमतः। तदिदं सूत्रकारेण "फलमत उपपत्ते" रिति समर्थितम्।

इत्थञ्च पुण्यं पापमिति नापूर्वं किञ्चित्, किन्तु-भगवतः सङ्कल्पविशेष एव-"एनमपराधिनमधो नयामि, एनं सुकृतिनमुन्नयामी"ति। तथा च कर्मयोगादीनां भगवतः प्रसादसम्पादने उपयोगः सिद्धः। उपायत्वं तु मुख्यं भगवति स्थितम्। तदयमेव मुख्योपायभूत

टी-स्तेन तेन कर्मयोगादिना प्रसदनोपायेन प्रसन्नः फलं प्रयच्छति। पुण्यपापयोरपगमश्च संसृतिसम्पादकसङ्कल्पाकरणमेव। यदा मुमुक्षुर्मुक्तिसाधनतया भगवदाज्ञामनुतिष्ठति तदा भगवान् मोक्षायैव सङ्कल्पं करोति न त्वन्यथा। इयमेव पुण्यपापनिवृत्तिरुच्यते। यदायं घनकरुणानिधिः श्रीनिधिः स्वयम्, अकिञ्चनमात्मैकशरणमवलोक्य प्रसन्नो भूत्वा निजपदं प्रयच्छति को वा दण्डेनतं वारयेत्। तस्मादीदृश सिद्धोपायवरणरूपे न क्षुद्रजनशङ्कावकाशः।

किञ्च-" मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते "। इति गीतावचनेन प्रपदनस्यैव मायातरणोपायत्वं व्यक्तम्। तच्चोपपादनीयम्। कर्मयोगाद्युपायसम्पादकतया परम्परया तस्योपयोगस्तत्रोक्त इति चेत्, सत्यम्, तद्वा कथम्? ईश्वरप्रसादद्वारेति चेत्, तर्हि समर्थं मन्ये तथा प्रसीददिति चेत्, सर्वथाशक्ते उपायान्तररहिते भवदावानलतो भीतभीते आत्मैकशरणे कुतो न प्रसीदेत्? कुतो वा न प्रयच्छेन्निजपदम्? स किमसमर्थः? किं वा असर्वज्ञः? किं वा न वत्सलः?। ये पुनर्व्यवहारमात्राय सकलकल्याणगुणमीश्वरमभ्युपगम्य, वस्तुस्थितौ तमवधूय, निर्विशेषं ज्ञप्तिमात्रमातिष्ठन्ते, तेषां साक्षान्मोक्षसाधनत्वं प्रपदने दुर्लभम्।

प्रपदनपदमेतत्तत्त्वदृष्टेस्तु दृष्ट्या
गिरिशिखरगतस्य ग्रामकोणे कुटीव।
इति कतिचिदवज्ञादृष्टिमातन्वतेऽस्मिन्
भगवति रसिकानां ग्रामकोणाद्वहिष्ठा॥

सार्वज्ञ्यादिसकलकल्याणगुणसागरं परात्परं सर्वशेषिणमत्यन्तागम्यपरब्रह्मभूतं पुरुषोत्तमं श्रीमन्नारायणमभ्युपगच्छतां तच्छरणागतेः किं वा दुर्लभम्?। प्राचीकशच्च भगवान् चरमश्लोकेन गीतायामिममनुत्तमं साक्षान्मुक्तिपथम्। तथा च वचनान्तराणि-

" शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः।
तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥
अनन्तज्ञानशक्त्यादिकल्याणगुणसागरे।
परे ब्रह्मणि लक्ष्मीशे मुख्योऽयं सर्वसिद्धिकृत्॥
प्रशासितुरशेषाणामात्मनां परमात्मनः।
न हि प्रसादनं विष्णोरन्यदात्मार्पणादृते॥
अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम्।
देवो नारायणः श्रीमान् ददात्यभयमुरुसुकः "॥ इत्यादीनि।

अर्थश्च स्फुटः। श्रुतावपीदं श्रूयते-
" यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये "॥
" न्यासमेषां तपसातिरिक्तमाहु"रिति॥

अथ साधनान्तरतो विशेषश्चात्र सुगमतेत्यादिः, भक्तियोगो हि दुरधिगमः; तन्नाङ्गस्वरूपेऽनुष्ठेये कर्म ज्ञातव्यम्।

टी— " किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः " ॥

यश्च आदूरादुपकारको भक्तियोगे ज्ञानयोगः, स हि दुष्प्रापः ।
" सन्न्यासस्तु महाबाहो ! दुःखमाप्तुमयोगतः " ।

भगवता प्रतिबोधितः पार्थोऽप्याह-
" योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ! ॥
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥
" चञ्चलं हि मनः कृष्ण ! प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्" ॥ इति ।

आह च भगवान्-
" असंशयं महाबाहो ! मनो दुर्निग्रहं चलम् " । इति च ।

शिथिलो रथः शरीरम्, सारथिश्चाध्यवसायः कर्णस्य शल्य इव सर्वथा विप्रतीपवृत्तिः, प्रग्रहश्च चञ्चलं मनः, दुष्टाश्चेन्द्रियाश्वाः, परितश्च विषयपथा रजोभूयिष्ठाः निम्नोन्नताः, रथी चायमात्मा तमसा ग्रस्तनयनः । प्रस्थितश्च मुमुक्षामात्रेण महति पथे । ईदृशोपकरणसम्पन्नोऽयं कथं कियता कालेन विना प्रसङ्गमापदामुद्दिष्टं पदमधिगमिष्यति, न विद्मो वयम् । तदीदृशात्क्लेशबहुलात्पथः अयमेव पन्थास्सरलः ।

सर्वाधिकारत्वमपरो विशेषः, मोक्षसाधनतया वेदान्तोदिते ब्रह्मोपासने त्रैवर्णिकानामेवाधिकारो नान्येषामिति अपशूद्राधिकरणे समर्थितं नाम । अस्यां तु नाधिकारनियमः, तथा च वचनम्—

" प्राप्तुमिच्छन् परां सिद्धिं जनः सर्वो ह्यकिञ्चनः ।
श्रद्धया परया युक्तो हरिं शरणमाश्रयत् ॥
ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा ।
सर्व एव प्रपद्येरन् सर्वधातारमच्युतम् ॥
न जातिभेदं न कुलं न लिङ्गं न गुणं क्रियाः ।
न देशकालौ नावस्थां योगो ह्ययमपेक्षते ' इति ॥

इमानि वचनानि—
"केनोपायेन ? भगवन्निह सर्वेऽपि जन्तवः ।
प्राप्नुयुः परमां सिद्धिं सद्यो विगतकल्मषाः " ॥

इति प्रश्नस्य प्रतिवचनरूपाणि । तदेभिर्वचनैः सर्वाधिकारता सिद्धा । अनुष्ठानमपि स्मरत–न किं द्रौपदी शरणागतिमकरोद्वसनापहरणापदि, यद्यपि न मुक्तयेऽकारि, तथापि फलवैलक्षण्यमात्रम्, उपायस्तु स एव । एवं ग्राहाभिभूतो गजेन्द्रस्तिर्यग्जातीयोऽपि शरणागत्यालभताभीष्टमिति सुप्रसिद्धम् । राक्षसपुङ्गवो विभीषणश्च । इत्थं वचनतः, अनुष्ठानतश्च सिद्धं सर्वाधिकारत्वम् ॥

अथ स्वरूपपर्यालोचनायामपि सर्वेषामधिकारस्सिद्ध्यति कस्याप्यसामर्थ्याभावात् । इह हि परिगृह्यमाण उपायस्सर्वेश्वरः, स च सर्वेषां समः, तत्परिग्रहणमपि प्रार्थनामात्रम् । तत्र तु चैतन्यमात्रमपेक्षते, यच्च कार्पण्यमाकिञ्चन्यानुसन्धानं, तत्तु गत्यन्तरानर्हाणां सुगमम्, तस्मादस्त्येवात्र सर्वेषामधिकारः ।

टी-किञ्चानया प्रपत्त्या तत्तदभिलषितसिद्धिसम्भवात्सर्वफलसाधारण्यमस्योपायस्य, उपायान्तराणां तु न तथा । तस्मादभिलषिताखिलार्थप्रदत्त्वमपरो विशेषः ।

एवं प्रपदननिष्ठस्य न साधनान्तरापेक्षा, कर्मयोगादिसाधनान्तरनिष्ठस्य चैतदपेक्षास्ति । उक्तञ्च गीतायाम्-" मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते " ॥ इति ।

अन्यथा भगवन्मायायाः प्रबलत्वेन परश्शतं क्रियमाणेनापि इन्द्रियनिग्रहोपायेन तदसिद्धेः । उक्तञ्चोपनिषदि-

" इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः " ॥ इति ।

इन्द्रियाणि वशीकार्याणि नाम, अर्थेषु सन्निकृष्टेषु इन्द्रियवशीकरणं न भवेत् । तत्-वशीकार्यत्वे इन्द्रियेभ्य अर्था पराः-प्रधानाः, अर्थानां वशीकरणं प्रथमं कार्यमिति यावत् । अर्थानां वशीकरणं नाम दूरीकरणम्, मनस्यवशीकृते अर्थवशीकरणेनापि न फलम्, तस्मादवश्यं वशीकार्यं मनः, तन्मनो वशीकार्यत्वेऽर्थेभ्योऽपि प्रधानम् । एवं "मनसश्च परा बुद्धि"रित्येवं क्रमेण उत्तरोत्तर वशीकार्यत्वे प्रधानं कथयन्ती सती अन्ते "पुरुषः परः" इति वशीकार्यत्वे परमपुरुषस्य प्राधान्यमाह-इयं श्रुतिः । परमपुरुषस्य वशीकरणं प्रपदनेन । तथा चानया श्रुत्या परमपुरुषप्रपदनं विनेन्द्रियजयो न भवेदित्युक्तं भवति । तस्मात्साधनान्तरनिष्ठानामेतदपेक्षत्वम्, अस्याश्च इतरनिरपेक्षत्वमिति च विशेषः, तथा च वचनानि—

" अनेनैव हि कर्माद्या योगास्सिद्ध्यन्ति योगिनाम् ।
सिद्धिर्न तद्व्यपेक्षास्य तस्मादेनं परं विदुः " ॥ इति ॥

न केवलमुपायान्तरनिरपेक्षता, किन्तु-ब्रह्मास्त्रशणवल्कलन्यायेन उपायान्तरासहिष्णुत्वमपि बोध्यम् । शणवल्कलबन्धनेन ब्रह्मास्त्रमहिमेवोपायान्तरसङ्गे सति प्रपदनमहिमापगच्छेदिति यावत् ।

द्रौपदी-"एते मम पतयो महारथा लोकैकवीराः, इमे चास्मत्पक्षपातिनो भीष्मप्रभृतयो गुरुजनाः " इति तेषु यावद्दत्तदृष्टिरासीत्, यावच्च स्वमानरक्षणं स्वयं प्रयत्नमकरोत्, गजेन्द्रोऽपि स्वीयबले यावद्धृतादर आसीत्, तावत्तयोर्न क्लेशो निवृत्तः, समधिको मानप्राणभङ्गान्तः क्लेश एव समुपनतः । यदा चावधूत्याखिलमात्मीयवर्गमकिञ्चित्करम्, परित्यज्य स्वप्रयत्नमपि तमेव सर्वरक्षकं आश्रितवात्सल्यजलधिं पुरुषोत्तमं सपदि शरणमगच्छताम् तदा तयोः सपदि समजनि शोकसागरसमुत्तरणम् । तस्मादीदृशे सिद्धोपायपरिग्रहे साधनान्तरानन्वय एवाङ्गतयापेक्षते, तत्सिद्धमुपायान्तरासहिष्णुत्वम् ।

अयमपरो विशेषः-उपायान्तरं हि आप्रयाणम्-आशरीरपातं कर्त्तव्यम् । उक्तञ्च सूत्रकृता-"आप्रयाणात्तत्रापि हि दृष्ट"मिति । तदपि असकृदावृत्तिरूपम्, ध्यानयोगस्य स्वरूपं तैलधारावदविच्छिन्नमसकृदनुस्मरणम् । ईदृशं ध्यानं प्रत्यहं योगसमुचिते कालेऽनुष्ठेयमिति सूत्रकृदाशयः । इदञ्च प्रपदनं सकृदेव कार्यं तावतैव प्रपदनस्वरूपसिद्धेः ।

टी-वचनं-च " आर्त्तानामाशु फलदा सकृदेव कृता ह्यसौ ॥
दृप्तानामपि जन्तूनां देहान्तरनिवारिणी" ॥ इति ।

तथा च चक्रवर्तितनूजवचनम्-
" सकृदेव प्रपन्नाय तवास्मीति च याचते " ॥ इति ।

अयमन्यो विशेषः-साधनान्तरेऽन्तिमस्मरणापेक्षास्ति, तथा च गीतायाम्—

" अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः" ॥ इति ।

विवृतं चैतद्भगवता भाष्यकृता-इदमपि त्रयाणां साधारणमिति । इह तु न तदपेक्षा, यदयं न्यस्तभरः, नानेन स्मर्तव्यं किञ्चित् । स एव तु स्मरति । तथा च भगवतो वचनम्-

" स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः ॥
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम् ॥

ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् " ॥ इति ॥

अन्यश्चायं विशेषः-प्रारब्धकर्मणामप्यनेन नाशः, तथा च वचनम्-
" साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी " इति ॥
" आर्त्तानामाशु फलदा "
"दृप्तानामपि जन्तूनां देहान्तरनिवारिणी " ॥ इति ॥

आर्त्तदृप्तभेदेन द्विविधयोः प्रपन्नयोर्मध्ये आर्त्तविषये प्रपदनानुष्ठानसमनन्तरक्षण एव मोक्षदा। दृप्तानां विषये तु शरीरान्तरसम्बन्धापादकप्रारब्धनाशेन तच्छरीरावसान एव मोक्षदेति श्लोकाशयः ॥

अन्यश्च विशेषः-साधनान्तरनिष्ठस्य साध्योपायभूते स्वेनाश्रिते ध्यानयोगे, तेन प्रसाद्यमाने परमपुरुषे च उपायत्वबुद्धियोगोऽस्ति, प्रपत्तिनिष्ठस्य तु सिद्धोपाये एकत्रैव, प्रपदनस्यानुपायत्वात्। उपायत्वमिच्छद्भिरपि प्रपदनस्वरूपपर्यालोचनायां-तदनुष्ठानवेलायां तस्मिन्नुपायत्वबुद्धिर्नोचितेति तद्बुद्धियोगो निषिध्यते। तथाच वचनम्—

" त्वय्येव त्वदुपायधीरपिहितस्योपायभावास्तु मे " इति ।

अपिहितस्योपायभावेति पदे दृष्टिर्दीयताम् । क्रियमाणायामस्यां प्रपत्तौ उपायत्वबुद्धिर्मे मा भूदिति हि तदाशय इति ॥

अजानता जानता वा प्रपत्तौ वाङ्मयेरिता ।
इदमागो मम क्षन्तुं भक्तिधर्मात्मजोऽर्हति ॥
वाग्विसर्गो मम प्रायः स्वतो दोषाविलोऽपि सन् ।
सिद्धोपायानुषङ्गेण शुद्धो भवतु सर्वतः ॥ इति ॥ २-२-२९ ॥

इति श्री परमसद्गुरुश्रीनित्यानन्दमुनिशिष्य-कृष्णजीवनदासमुनिविरचितायां शाण्डिल्यसूत्रभाष्यटीकायां भक्तितत्त्वप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयमाह्निकम् ॥ २-२ ॥

समाप्तो द्वितीयोऽध्यायः ॥ २ ॥

ॐ

जयतु भगवान् श्रीस्वामिनारायणः ।

## तृतीयोऽध्यायः—

समस्तचिदचिद्वस्तुशेषिणं सर्वकारणम् ।
तं नौमि सहजानन्दमक्षरात्परतः परम् ॥ १ ॥

भा—द्वितीयाध्यायस्य द्वितीयाह्निके-श्रवणादिभक्तेः परभक्त्युत्पादकतोक्ता, श्रवणादिभक्तिभिरन्तःकरणपावित्र्यं चोक्तम्, श्रवणादिषु येन भगवत्प्रसन्नता तस्य बलिष्ठत्वमुक्तम्, परमेश्वरार्पितकर्मभिर्बन्धनिवृत्तिरुक्ता, ईश्वरानर्पितक्रियाफलं देहशुद्धिरेव, न मोक्ष इत्यप्युक्तम्, मनःस्थैर्यार्थं ध्याननियम उक्तः, भगवत्पादोदकप्रासादिकयोर्ग्राह्यतोक्ता, आर्त्तादिभक्तित्रैविध्यस्य गौणत्वमुक्तम्, गौणभक्तीनां बहिरङ्गान्तरङ्गत्वमुक्तम्, धर्मशास्त्रोक्तपापप्रायश्चित्तस्थानार्हत्वं भगवद्भक्तेरुक्तम्, क्रममुक्तिः सद्योमुक्तिश्चोक्ता, भक्त्येकान्तिकधर्मयोरैक्यमुक्तम्.॥

---

### અધ્યાય-૩ જો-

સમસ્ત ચિત્ અચિત્ વસ્તુમાત્ર જેના શરીરરૂપેજ અપૃથક્સિદ્ધ હોવાથી જે સ્વયં સર્વના શેષી-શરીરી અને સ્વામી છે, સર્વ કારણના પણ જે સ્વયં સ્વતંત્ર કારણ છે. અને સર્વથી પર એવા અક્ષરથી પણ જે પર-સ્વરૂપ, સ્વભાવ અને વિભૂતિ વિગેરે કલ્યાણ-ગુણગણોથી ભરપૂર હોવાથી શ્રેષ્ઠ અને નિયામક છે, એવા સર્વાન્તરાત્મા પ્રભુ શ્રીહરિ શ્રીસહજાનન્દસ્વામીને હું નમસ્કાર કરૂંછું. ॥ ૧ ॥

બીજા અધ્યાયના બીજા આહ્નિકમાં—શ્રવણાદિક ભકિતની પરા ભકિતમાં ઉત્પાદકતા ( ઉત્પન્ન કરવાપણું ) કહી. । શ્રવણાદિક ભકિતથી અન્તઃકરણની પવિત્રતા થાયછે એમ પણ કહ્યું. । શ્રવણાદિક સાધનોમાં જેનાથી ભગવત્પ્રસન્નતા થાય તેનું બલિષ્ઠપણું કહ્યું. । પરમેશ્વરને અર્પણ-બુદ્ધિથી કરેલાં કર્મોથી બન્ધનિવૃત્તિ કહી. । તેમજ—ઈશ્વરને નહિ અર્પણ કરેલી ક્રિયાઓનું ફળ માત્ર દેહશુદ્ધિજ છે, પણ મોક્ષ નથી એમ પણ કહ્યું. । મનની સ્થિરતાને માટે ધ્યાનનો નિયમ-(આવશ્યક્તા) કહ્યો. । ભગવાનનું ચરણોદક અને પ્રસાદભૂત અન્નાદિક વસ્તુઓની ગ્રાહ્યતા-પવિત્રતા કહી. । આર્ત્ત, જીજ્ઞાસુ અને અર્થાર્થી, એ ત્રિવિધ ભકતોની ત્રિવિધ ભકિતની ગૌણતા કહી. । ગૌણ ભકિતનું બહિરંગપણું અને અન્તરંગપણું કહ્યું. । ધર્મશાસ્ત્રમાં કહેલા પાપનાં પ્રાયશ્ચિત્તના સ્થાનની અર્હતા-યોગ્યતા પણ ભગવદ્ભકિતની છેજ એમ કહ્યું. । ક્રમમુકિત

भा-अथ तृतीयाध्याये भजनीयस्वरूपमुच्यते, तच्चैकमनेकं वेत्याशङ्कायामाह—भजनीयमिति ॥

**सू० भजनीयमिदमद्वितीयं कृत्स्नस्य तत्स्वरूपत्वात् ॥ ३-१-१ ॥**

भजनीयमिदं श्रीकृष्णस्वरूपम्, अद्वितीयम्—एकमेव, नान्यत्। कृत्स्नस्य-भजनीयतया तत्र तत्रोक्तस्याग्नीन्द्रसूर्यादेः तत्स्वरूपत्वात्। प्रपञ्चितं चैतद्विभूत्यध्याये। स्मर्यते चान्यत्र—

" यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणि तथैव सर्वार्हणमच्युतेज्यया" ॥ इति ॥

भगवतः कृष्णस्यैव मुमुक्षूपास्यत्त्वमन्येषां तदभावश्चान्यत्र स्मर्यते—

" तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्तितव्यश्च स्मर्त्तव्यश्चेच्छताभयम् " ॥
" वासुदेवं परित्यज्य योऽन्यद्देवमुपासते ।
त्यक्त्वामृतं स मूढात्मा भुङ्क्ते हालाहलं विषम् " ॥

---

અને સદ્યોમુક્તિ પણ કહી. । તેમજ ભક્તિ-પરા ભક્તિ અને એકાન્તિક ધર્મનું ઐક્યજ છે એમ પ્રતિપાદન કર્યું. ॥

હવે ત્રીજા અધ્યાયમાં ભજન-ઉપાસના કરવા યોગ્ય પરમાત્માનું સ્વરૂપ કહેવામાં-પ્રતિપાદન કરવામાં આવેછે—

હવે-તે સ્વરૂપ એકજ છે ? કે-અનેક છે ? એમ આશંકા ઉઠાવીને તેનું સમાધાન કરેછે-

**ઉપાસના કરવા યોગ્ય આ સ્વરૂપ અદ્વિતીય ( એકજ ) છે,
સર્વને તેની સ્વરૂપતા-શરીરતા છે માટે. ॥ ૩-૧-૧ ॥**

ભજન કરવા યોગ્ય આ શ્રીકૃષ્ણનું સ્વરૂપ, અદ્વિતીય-એકજછે, બીજું-સ્વતંત્ર કઇ છેજ નહિ. । સર્વને-ભજનીયપણે તે તે પ્રસંગે કહેલા અગ્નિ, ઇન્દ્ર અને સૂર્યાદિકને, તેનું શરીરપણુંજ છે માટે. । વિભૂતિ અધ્યાયમાં આ વિગતવાર કહેવામાં આવ્યું છે. । બીજા ગ્રન્થોમાં પણ કહેલું છે-" જેમ વૃક્ષના મૂળમાં પાણી સીંચવાથી તેનાં ડાળ, ડાળખીઓ અને ઉપશાખાઓ સઘળાં તૃપ્ત થાયછે, વળી-પ્રાણને આહાર આપવાથી ઇન્દ્રિયો જેમ સચેત થાય છે, તેજ પ્રમાણે સર્વકારણ એવા અચ્યુત ભગવાનની પૂજા કરવાથી સર્વની પૂજા થાયછે. " એમ. ।

મુમુક્ષુઓને ઉપાસના કરવા યોગ્યપણું શ્રીકૃષ્ણનુંજ છે અને બીજા દેવોને તેનો અભાવ છે, એમ બીજા ગ્રન્થોમાં કહેલું છે-

भा-" वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः " ॥
" यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते ।
स हेमराशिमुत्सृज्य पांसुराशिं जिघृक्षति " ॥
" अनादृत्य तु यो विष्णुमन्यदेवमुपासते ।
गङ्गाम्भसः स तृष्णार्तो मृगतृष्णां प्रधावति " ॥
" हरिरेव सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः ।
मन्त्रं विष्णोः सदा विप्राः! पठध्वं ध्यात केशवम् " ॥
" नारायणात्परो देवो न भूतो न भविष्यति " ।
" इदं रहस्यं वेदानां पुराणानां तथैव च ।
सर्वे देवाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः ।
विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः " ॥
" ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा ।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः " ॥

---

"હે ભારત ! તેથી અભય પદ પામવા ઇચ્છતા જનોએ સમર્થમૂર્તિ ભગવાન શ્રીહરિજ શ્રવણ કરવા યોગ્ય, કીર્તન કરવા યોગ્ય અને સ્મરણ કરવા યોગ્ય છે." । "જે માણસ વાસુદેવ ભગવાનનો પરિત્યાગ કરીને બીજા દેવને ઉપાસે છે, તે મૂઢાત્મા તો અમૃત છોડી દઇને હાળાહળ ઝેરનેજ ખાયછે." । "વાસુદેવનો પરિત્યાગ કરીને જે બીજા દેવને ઉપાસેછે, તે દુર્મતિ જન તો ગંગાકીનારે તરસ્યો થઇને કૂવો ખોદેછે-ખોદનારજેવો મહામૂર્ખ છે."। "જે માણસ તો વિષ્ણુ ભગવાનનો પરિત્યાગ કરીને મોહાન્ધ થઇને બીજા દેવને ઉપાસે છે, તે તો સુવર્ણના ઢગલાને છોડી દઇને ધૂળના ઢગલાને લેવા ઇચ્છે છે." । "વિષ્ણુનો અનાદર કરીને તો જે માણસ અન્ય દેવની ઉપાસના કરેછે, તે તો તરસથી પીડાતો માણસ ગંગાજળથી વિમુખ થઇને ઝાંઝવાંના જળ તરફ દોડે છે-દોડનારા જેવો છે. "। " હે વિપ્રો ! સત્ત્વગુણમાં વર્તનારા તમોએ નિરન્તર શ્રીહરિ ભગવાનજ ધ્યાન કરવા યોગ્ય છે, તમે સદાય વિષ્ણુનો મન્ત્ર જપો ! અને કેશવ ભગવાનનું ધ્યાન કરો !" । "શ્રીનારાયણ ભગવાનથી પરશ્રેષ્ઠ કોઇ દેવ થયોય નથી અને થશેય નહિ. " । " સર્વ વેદોનું એજ રહસ્ય છે, તેમજ-પુરાણોનું પણ એજ રહસ્ય છે, કે-બ્રહ્માંડની અંદર વર્તતા એવા પિતૃદેવગણોએ સહિત બ્રહ્માદિક સર્વ દેવગણો શ્રીવિષ્ણુ ભગવાન થકીજ ઉત્પન્ન થયેલા છે, આ પ્રમાણે આ વેદની શ્રુતિજ કહે છે. " । " બ્રહ્માદિક સર્વ દેવતાઓ પૂર્વે શ્રીવિષ્ણુ ભગવાનને આરાધીને તે કેશવ ભગવાનની પ્રસન્નતાથીજ પોત-પોતાના

भा-" भेजिरे मुनयोऽथाग्रे भगवन्तमधोऽक्षजम् ।
सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ।
मुमुक्षवो घोररूपान् हित्त्वा भूतपतीनथ ॥
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ।
रजस्तमःप्रकृतयः समशीलान् भजन्ति वै ॥
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः " ॥
" वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः " ॥
" नारायणपरा वेदा देवा नारायणाङ्गजाः ।
नारायणपरा लोका नारायणपरा मखाः ॥
नारायणपरो योगो नारायणपरं तपः ।
नारायणपरं ज्ञानं नारायणपरा गति " रिति ॥

---

પદને પામેલા છે. " । "એથીજ પૂર્વે સર્વ મુનિઓ અધોક્ષજ ભગવાનને ભજતા હતા. વિશુદ્ધ સત્ત્વગુણ અને તેને અનુસરીને રહેલા ધર્મજ્ઞાનાદિક જે ગુણો તે આ લોકમાં ક્ષેમ-કલ્યાણને માટે કલ્પાય છે, માટેજ મોક્ષાર્થી મુમુક્ષુજનો ઘોરસ્વરૂપ ભૂતપતિ-ભૈરવાદિકનો ત્યાગ કરીને, અસૂયાએ રહિત થકા શાન્તસ્વરૂપ એવી નારાયણની કળાઓને-અવતારોને ભજે છે, રજોગુણ-તમોગુણ પ્રધાન પ્રકૃતિવાળા તુલ્ય સ્વભાવવાળા રજોગુણી તમોગુણી એવા દેવોને ભજે છે, લક્ષ્મી, ઐશ્વર્ય અને પ્રજાની ઇચ્છાવાળા મનુષ્યો પિતૃઓ, ભૂતો અને પ્રજાપતિઓ વિગેરેને ભજે છે. " । " વેદો બધાય વાસુદેવપર છે, કર્મયોગ વિગેરે સર્વ યોગો વાસુદેવપર છે, ક્રિયાઓ વાસુદેવપર છે, જ્ઞાન વાસુદેવપર છે, તપ વાસુદેવપર છે, ધર્મ વાસુદેવપર છે, તેમજ ગતિ-પ્રાપ્તિ પણ વાસુદેવપર છે. " । " વેદો નારાયણપર છે, સર્વ દેવતાઓ નારાયણ થકીજ ઉપજેલા છે, લોક સર્વ નારાયણપર છે, સર્વે યજ્ઞો નારાયણપર છે, યોગ નારાયણપર છે, તપ નારાયણપર છે, જ્ઞાન નારાયણપર છે અને ગતિ-પ્રાપ્તિ પણ નારાયણપર છે. " ॥ ઇતિ ॥

આ સૂત્રનો અર્થ આ પ્રમાણે કરવો એજ સર્વ પ્રકારે ઉચિત છે, કેમકે-પ્રારંભને અનુરૂપ-બરોબર બંધબેસતો છે માટે. । જુઓ ! પ્રારંભ આ પ્રમાણે છે-"પરમેશ્વરમાં પરમ પ્રેમ એજ ભકિત છે." । "તે પરમેશ્વરમાં પૂર્ણ નિષ્ઠા પામનારને મુક્તિ મળવાનો ઉપદેશ છે માટે. ।" "બીજાં જ્ઞાનાદિક સાધનોને એની અપેક્ષા છે માટે ભકિતજ મુખ્ય છે." વિગેરે જાણવો. ।

टी-अध्यायसङ्गतिमाह-वृत्तानुवादपूर्वकम् द्वितीयाध्यायस्येत्यादिना ॥

अयमत्राद्वितीयशब्दो न द्वितीयमात्रप्रतिषेधपरः, किन्तु-भजनीयद्वितीयप्रतिषेधपरः। यथा-"अद्वितीयः शूर" इति निर्देशः शूरान्तरप्रतिषेधपरः, इत्यभिप्रेत्य भावमाह-एकमेव नान्यदिति।

ननु-कथमुच्यते? भजनीयान्तरं नेति, बहवो हि देवा भजनीयाः श्रुतिस्मृतिषु प्रसिद्धाः, इत्याशङ्कायां सूत्रशेषः प्रवर्तत इत्याशयेन भावमाह-कृत्स्नस्येत्यादिना। भजनीयतया तत्र तत्रोक्तस्येति। भजनीयान्तरप्रतिषेधे हि भजनीयानामेव प्रसङ्गो न घटपटादीनाम्। तद्युक्तः कृत्स्नशब्दस्य वैयर्थिकाशेषावबोधपर्यन्तः सङ्कोच इति भावः। तत्स्वरूपत्वादिति। तस्य स्वरूपमैश्वर्यलक्षणं धर्मो येषु तेषां भावस्तस्मात्। परमात्मना भगवतानुप्रविष्टाः तदैश्वर्यलेशाहितैश्वर्यकाः सर्व एवाग्न्यादयो देवाः, अतो न ते वस्तुतो भजनीयाः, किन्तु-यस्येदमैश्वर्यमेषु स एव हि तत्त्वदर्शिभिर्भजनीय इति भावः। तत्र प्रमाणमाह-प्रपञ्चितमित्यादिना। विभूत्यध्याये इति। "यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽश सम्भवम्" इत्यन्तेन।

भजनीयस्वरूपविवेचनारम्भे भजनीयान्तरप्रतिषेधं कृत्स्नशब्दस्य प्रवृत्तिसङ्कोचं चास्वारस्यमालोच्यान्यथा व्याचष्टे सूत्रम् यद्वेत्यादिना। सूत्रस्थमिदं पदं व्याचष्टे-अस्मिन् शास्त्रे प्रस्तुतमिति। सर्वेश्वरतत्त्वमिति। "सा परानुरक्तिरीश्वरे" इति ईश्वरत्वेनासाधारणेन रूपेणैव तु परब्रह्म प्रस्तुतम्। तस्य स्वरूपयाथात्म्यमुच्यते-अद्वितीयमिति। तत्पुरुषभ्रमं व्यावर्त्तयन्नाह-द्वितीयशून्यमिति।

ननु-जगदिदं कार्यकारणात्मकं चिदचिदात्मकं च दृश्यते, तत्कथमुच्यतेऽद्वितीयमित्याशयेनाक्षिपति-कथमिति। कथमयं परिहारस्तत्स्वरूपत्वादिति। अविकृतं हि परब्रह्म यः सर्वेश्वरः। विकारि चैतत्कार्यकारणात्मकमचन्यादि। प्रेरिता चायम् परमात्मा, भोक्तृभोग्यादिलक्षणं तु चिदचित्तत्त्वमनीशितृ। अतो भावमाह-तदात्मकत्वादिति। कथमयमस्य शब्दस्य[1] भावः? उच्यते-आत्मतत्त्वं यथावस्थितमविदुषामिदं द्वितीयमिदं तृतीयमिति भवति व्यवहारः। विदुषां तु एकमेव तत्त्वम्। न च क्षेत्रज्ञानन्त्यमात्रेण स्वतन्त्रानेकवस्तुसद्भावः। यदमी क्षेत्रमिव सर्वात्मनः परमात्मन एकस्य शरीरतया, द्रव्यस्य जातिगुणादिवत्पृथक्सत्तारहितास्तत्सत्तैकसत्ताकाः परतन्त्राः प्रकारीभूताः। तत्सर्वेश्वर एव च सर्वस्यात्मा अद्वितीयः। न च स्वनियतप्रकारैः स्वस्य सद्वितीयता। न हि गन्धरूपरसाद्यैः फलस्य सद्वितीयता। धर्म्यन्तरसद्भावो हि सद्वितीयतां वस्तुन आपादयेत्। परमात्मा चायं स्वेतरसमस्तचिदचित्प्रकार इति अस्य स्वरूपं विशिष्टमेव भवति। विशिष्टस्य विशेषणमपि स्वरूपमिति निर्देशमर्हति। न हि विशिष्टं केवलेन विशेष्येण विशेषणेन वा निरूपयितुं शक्यते। तदंशद्वयमपि विशिष्टस्य स्वरूपमेव। तदुक्तं निर्दिष्टं-कृत्स्नस्य तत्स्वरूपत्वादिति। भावश्चास्य-तदात्मकत्वादिति युक्त एवोक्त इति।

यद्वा-रूपं शरीरम्, स्वं रूपमसाधारणं शरीरम्। न हि सर्वशरीरकत्वमन्यस्य ॥३-१-१॥

---

१. तत्स्वरूपत्वादितिशब्दस्य ॥

भा-समुचितश्चायमर्थः-सूत्रस्यास्य, प्रक्रमानुरूप्यात्। अयं हि प्रक्रमः—"सा परानुरक्तिरीश्वरे" "तत्संस्थस्यामृतत्त्वोपदेशात्" "सा मुख्येतरापेक्षत्त्वात्" इत्यादिः॥

यद्वा—भजनीयमिदम्—यद्भजनीयतयास्मिन् शास्त्रे प्रस्तुतं तदिदं सर्वेश्वरतत्त्वम्, अद्वितीयम्—द्वितीयशून्यम्। कथम्? कृत्स्नस्य तत्स्वरूपत्त्वात्—तदात्मकत्त्वादित्येतत्। तथा च श्रूयते—"ऐतदात्म्यमिदं सर्वम्" "अन्तः प्रविष्टः शास्ता जनानाम्" "यस्य पृथिवी शरीरम्" "यस्यात्मा शरीरम्" इत्यादि॥३-१-१॥

मायास्वरूपमाह-तच्छक्तिरिति।

## सू० तच्छक्तिर्माया जडसामान्यात्॥ ३—१—२॥

त्रिगुणात्मिका तमोमयी विचित्रकार्यकारिणी या माया सा तच्छक्तिः, तस्य-भगवतः, शक्तिः-जगदुत्पत्तिस्थितिलयेपूपकरणभूता, "यस्याव्यक्तं शरीर" मित्यादिश्रुत्युक्तप्रकारेण शरीरभूता। शरीरिणं परित्यज्य शरीरवन्न स्वतः किञ्चिदपि कर्त्तुं समर्था। तत्र हेतुः-जडसामान्यात्-कालेन्द्रियादिभिर्जडैः सह सामान्यात्॥३-१-२॥

---

અથવા-ભજનીય આ સ્વરૂપ એટલે-જે ભજનીયપણે આ શાસ્ત્રમાં આરંભમાં કહેવામાં આવ્યું છે તે આ સર્વેશ્વર તત્ત્વ, અદ્વિતીય-દ્વિતીયશૂન્ય છે, શાથી? તો કે-સમગ્ર વિશ્વને તત્સ્વરૂપતા છે, એટલે કે-તદાત્મકતા છે માટેજ.। તે પ્રમાણેજ શ્રુતિ કહેછે-"આ સઘળું વિશ્વ એતદાત્મક છે."। "અંદર પ્રવિષ્ટ થકાજ જનોના શાસ્તા-નિયામક છે."। "પૃથ્વી જેનું શરીર છે."। "આત્મા જેનું શરીર છે."। ઇત્યાદિ॥ ૩-૧-૧॥

હવે-માયાનું સ્વરૂપ કહેછે—

**માયા તેની શકિત છે, જડને સમાન સ્વભાવની છે માટે.॥ ૩-૧-૨॥**

ત્રિગુણાત્મક, તમઃપ્રધાન અને વિચિત્ર કાર્ય કરનારી, એવી જે માયા તે તેની શકિત છે.। તે ભગવાનની શકિત એટલે-જગતની ઉત્પત્તિ, સ્થિતિ અને પ્રલયરૂપ ક્રિયામાં ઉપકરણભૂત-"અવ્યકત-પ્રકૃતિ જેનું શરીરછે."। ઇત્યાદિક શ્રુતિઓએ કહેલા પ્રકારથી પરમાત્માના શરીરભૂત છે.। શરીરીને-આત્માનો પરિત્યાગ કરીને શરીરજ જેમ, એમ પરમાત્મા સિવાય સ્વતઃ કંઇ પણ કરવાને સમર્થ નથી એ અર્થ છે.। તેમાં હેતુ—જડસામાન્યાત્—કાળ, ઇન્દ્રિયો, વિગેરે જડ પદાર્થોની સાથે સમાન ધર્મવાળી છે **માટે.** ॥ ૩—૧—૨॥

भा-अपृथक्सिद्धविशेषणतामेव द्रढयति-व्यापकत्वादिति ॥

## सू० व्यापकत्वाद्ब्रह्माभिन्नम् ॥ ३-१-३ ॥

ब्रह्मात्र प्रकृतिः, "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यह" मित्यत्र ब्रह्मशब्देन प्रकृतेर्ग्रहणात्। अभिन्नम्-अविभक्तम्। परमात्मनः पृथक्स्थितिं नार्हति। कुतः? तस्य-परमात्मन आत्मतया व्यापकत्वादित्यर्थः॥ ३—१—३ ॥

માયાની અપૃથક્સિદ્ધવિશેષણતાનેજ દૃઢ કરે છે—

બ્રહ્મ-(માયા) જુદી નથી, (પરમાત્માનું) વ્યાપકપણું છે માટે. ॥ ૩-૧-૩ ॥

આ સૂત્રમાં કહેલા બ્રહ્મ શબ્દથી પ્રકૃતિ જાણવી. "જગતના કારણભૂત એવી સર્વથી મોટી માયા તે મારી શક્તિ છે, તેમાં હું જગદ્રૂપ ગર્ભ ધારણ કરૂં છું." । એ વાક્યમાં બ્રહ્મ શબ્દથી પ્રકૃતિજ લીધેલી છે માટે. । અભિન્ન-અવિભક્ત છે. । અર્થાત્ પરમાત્મા થકી પૃથક્ રહી શકવાને યોગ્ય નથી. । શાથી? તો કે-તે પરમાત્માનું આત્મપણે-આત્મભાવે વ્યાપકપણું છે માટે. એ અર્થ છે. ॥ ૩-૧-૩ ॥

टी-मायास्वरूपमिति। माया—त्रिगुणा प्रकृतिः। तस्याः स्वरूपं निरूपयति। कस्मै? स्वतन्त्रप्रधानवादनिरसनमुखेन भजनीयस्यैश्वर्यज्ञापनाय। तच्च तदन्तर्यामितालक्षणमिति सर्वस्यैव ब्रह्मात्मकत्वं दृढीकृतं भवति॥

त्रिगुणात्मिकेति। त्रयो गुणा यस्यास्तदात्मिका-तत्स्वरूपा। तमोमयी-स्वार्थे मयट्, कार्यावस्थाव्यावृत्तिः, सर्वमूलभूता प्रकृतिरित्येतत्। विचित्रकार्यकारिणीति। मायाशब्दप्रवृत्तिनिमित्तमेतत्। सेयं प्रकृतिः कापिलाभिमतप्रकृतिवन्नानुमानिकी स्वतन्त्रा, किन्तु परस्य ब्रह्मणः शक्तिः, शक्तित्वं हि कार्योपयोग्यपृथक्सिद्धविशेषणत्वादित्याशयं प्रकाशयन् व्याचष्टे-सेत्यादिना। कस्मिन् कार्ये उपयुज्यते? आह-जगदुत्पत्तिस्थितिलयेष्विति। आस्तां कार्योपयोगित्वमस्याः, अथापि तदपृथक्सिद्धविशेषणत्वं कथम्? येन तच्छक्तित्वं स्यात्, तत्राह-"यस्याव्यक्त"मिति। शरीरभूतेति। एतेनापृथक्सिद्धविशेषणत्वं ज्ञापितम्। तच्छक्तित्वविधानेनाभिप्रेतं व्यावर्त्तनीयांशमाह-न स्वत इति। जडसामान्यात्—कालवत्, इन्द्रियवत्, रथादिवच, जडत्वाविशेषात्। चेतनानपेक्षप्रवृत्त्यनुपपत्तेरित्याशयेन व्याचष्टे—कालेत्यादिना। कालस्यापि परमात्मशक्तित्वं ज्ञापयता इदमुदाहृतम्। इन्द्रियेति। इन्द्रियस्य जीवाधिष्ठानेनैव प्रवृत्तिर्लोकविश्रुतेत्यध्यात्ममुदाहरणम्। आदिशब्देन वाह्यं रथादिकम्। इदमुभयं गुणमयेष्वेव विकारेषु चेतनसापेक्षत्वनियमेन गुणमयप्रकृतावप्ययमेव न्याय इति ज्ञापयति॥ ३ १-२ ॥

भिद्धातोर्विश्लेषविशेषार्थकत्वमभिप्रेत्याह-अविभक्तमिति। आकाशादिवद्व्यापकताया अनुपयुक्तत्वयाह-आत्मतयेति॥ ३-१-३ ॥

परैर्व्याख्यातृभिरादृतं पाठान्तरमाश्रित्य सूत्रत्रयमिदं प्रकारान्तरेण व्याख्यायते—

## सू० भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वात् ॥ (१) ॥

अविज्ञाय भजनीयस्य यथावस्थितं स्वरूपं भजनं हि न नियतं निःश्रेयसाय। परं ब्रह्मैव तु सकलवेदान्तवेद्यमस्मिन् शास्त्रे भजनीयतयोच्यत इत्यप्यवश्यं वक्तव्यमौपनिषदैकान्तप्रतिष्ठितये। तदस्य यथावस्थितं स्वरूपं–सकलजगदभिन्ननिमित्तोपादानत्वलक्षणमौपनिषदमसाधारणं निरूपयन्नारभते–"भजनीयेने"त्यादिना। अनेन सूत्रेणाभिधित्सितोऽर्थः–परस्य ब्रह्मणो भजनीयस्याभिन्ननिमित्तोपादानभावः। तत्र श्रौत उपादानभावः, आर्थो निमित्तभावः। तथा हि–इदं कार्यं विविधं भजनीयेन-भजनीयतयाभिहितेन परेण ब्रह्मणा,। अद्वितीयम्–अभिन्नम्, नार्थान्तरम्। कृत्स्नस्य तत्स्वरूपत्वात्–यथा घटशरावादेर्विविधस्य विकारस्य स्वरूपं तु मृदेव, तत् विकारस्य वैविध्येऽपि मृद्द्रव्यादनर्थान्तरम् घटशरावाद्यखिलं द्रव्यम्। तथा सर्वस्यास्य चराचरस्य विकारस्य धर्मिस्वरूपं तु ब्रह्मैव, तत् चराचरविकारवैविध्येऽपि न परब्रह्मणोऽर्थान्तरम्।

ननु–मृद्द्रव्यस्येवास्य परस्यैव ब्रह्मणः सर्वोऽयं विकार इत्यविकृतस्वरूपता व्याहन्येत। नैतत्––पिण्डघटशरावाद्यन्योऽन्योपमर्दलक्षणविकारयोगः साक्षान्मृद्द्रव्य इव नेह परस्मिन् ब्रह्मणि साक्षाच्चराचराद्यन्योऽन्योपमर्दलक्षणविकारयोगः। किन्तु–स्वशरीरतया स्वापृथक्सिद्धप्रकारभूतचेतनाचेतनद्वारेणेत्यविकृतत्वमक्षतमेव। अविकृतत्वेऽपि तत्तदवस्थचेतनाचेतनात्मतापत्तिलक्षणावस्थायोगवैचित्र्ययोगाद्विविधकार्यभावोऽपि मुख्य एवोपपद्यते। सर्वान्तरात्मतया सर्वप्रकारस्यास्य सर्वमेवेदमुपपद्यते। न हि किञ्चिज्जगत्यस्ति यदस्य न प्रकारतामेति।

सङ्ग्रहश्चात्र पूर्वेषाम्––

" उपादानं परं ब्रह्म समस्तचिदचिद्वपुः।
बहु स्यामिति सङ्कल्प्य सम्भवत्सत्यदात्मकम्॥
सौक्ष्म्यस्थौल्यविभेदेन विशेषणगतेन तु।
उपादानमुपादेयं विशिष्टं ब्रह्म वर्ण्यते॥
तत्तद्विशेषणांशेषु तत्तद्भेदव्यवस्थया।
मिथः स्वभावसाङ्कर्यमापतेन्न कदाचन"॥ इति॥

" वियद्वायुस्तेजःसलिलमवनिश्चेति यदिदं
विकाराणां या च प्रकृतिरपि यश्चेतनगणः।
न चैषामेकं वा यदगुणतया स्यात्तनुतया
प्रकारीभूयास्ते निखिलमपि यद्ब्रह्म इदम्॥
तथा च स्वैकान्तैरखिलचिदचिद्धर्मनिचयै-
र्विशिष्टं ब्रह्मैकं भवति न च तत्त्वं तदधिकम्।
तदेवोपादेयं स्वतनुचिदचित्स्थौल्यदशया
तदेवोपादानं भवति च तयोः सूक्ष्मदशया"॥ इति॥

एवं कृत्स्नस्य तत्स्वरूपत्वे प्रतिपादिते उपादानोपादेयभावानाक्रान्तस्य निमित्तान्तरस्यासम्भवादर्थादुपादानस्यैव निमित्तभावोऽपि सूचितो भवति॥ (१)॥

टी॰-ननु-न परं ब्रह्मोपादानं भवितुमर्हति, जगद्धि गुणमयम्, तस्योपादानेन तत्स्वरूपेण त्रिगुणेन भाव्यम्। नास्याधिष्ठात्रपेक्षा, स्वभावतः प्रसवशीलेयं प्रकृतिः, तन्निमित्तं परं ब्रह्मेत्यप्यसम्बद्धमित्यत्राह-तदिति।

## सू॰ तच्छक्तिर्माया जडसामान्यात्॥ (२)॥

या प्रकृतिरुच्यते सा न सर्वात्मना प्रतिषिध्यते। तस्या उपादानत्वमपि न सर्वात्मना प्रतिषिध्यते। किन्तु-स्वतन्त्रा सा स्वयमेव प्रसवशीलेत्येतत्तु परब्रह्मोपादानवादिभिरस्माभिः प्रतिषिध्यते। सा हि माया अत्याश्चर्याणि सृजतो मायाविनः कस्यचित् काचिदुपकरणभूता। यस्मान्माया तस्मान्मायाविनः परतन्त्रा सा। "मायां तु प्रकृतिं विद्या"दिति। मायाविनो महेश्वरस्य तस्येयं शक्तिश्च भवति। "मायिनं तु महेश्वर"मिति हि श्रूयते। श्रूयते च-"ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति। देवस्य—क्रीडनशीलस्य, आत्मनः—परमात्मनः शक्तिमिति तु तदर्थः। न केवलं श्रुत्या पारतन्त्र्यम्। जडसामान्याच्च-गुणमयानां रथादीनामिव जडानां अनन्याधिष्ठितानां प्रवृत्त्यनुपपत्तेः। परस्याधिष्ठातुरुपकरणीभूयैव कार्योपादिनी भवितुमर्हतीति युक्तं तच्छक्तिरिति। तथा च ब्रह्मात्मिकेयं ब्रह्मात्मकभूतादिरूपेण परिणमतीत्यनिष्टं न नः। विशिष्टस्यैव ब्रह्मस्वरूपतया तस्यैवावस्थाभेदेनोपादानोपादेयभावे अवस्थाभेदनिर्वाहकविशेषणांशयोरप्युपादानोपादेयभावस्याबाधितत्वात्। अधिकमन्यतो बोध्यम्। अस्मिन् सूत्रे न पाठभेदः॥ (२)॥

ब्रह्मोपादानभावं समर्थयता प्रतिक्षिप्त आनुमानिकप्रधानोपादानभाववादः। अथोपादानोपादेययोरन्यत्ववादः प्रतिक्षिप्यते। उपक्षिप्तं हि प्रथमसूत्रे ब्रह्मोपादानभावनिरूपणेऽनन्यत्वमुपादानोपादेययोः॥

## सू॰ व्यापकत्वाद्व्याप्यानाम्॥ (३)॥

आपाततो वचनमिदं व्याहतमिव। न ह्यन्यधर्मा अन्यस्मिन् स्युः, कार्येष्वेव कार्यता, कारणेष्वेव कारणता, व्याप्येष्वेव व्याप्यता, व्यापकेष्वेव व्यापकता। व्यापकं भवतीति तु वचनमनुपयुक्तम्। एकमपेक्ष्य व्याप्यानामन्यमपेक्ष्य व्यापकतेत्येतदप्यनुपयुक्तं वचः। तदयमर्थः-व्यापकं यद्वस्तु तस्य यो भावः-तादात्म्यम् तस्मादित्यर्थः। व्याप्यानां व्यापकतादात्म्यादिति यावत्। अत्र व्याप्यव्यापकशब्दावारभ्यारम्भकयोर्वर्त्तेते। अवयविद्रव्यान्तरवादिनामपि तयोर्व्याप्यव्यापकभावस्त्वबाधितः। तयोरयुतसिद्धताप्रयोजकः कश्चन सकलप्रमाणपथातीतः कल्प्यते तैः। स एव प्रत्यक्षावगतेन तादात्म्येनोपपादितेनेह प्रतिषिध्यते। इत्थञ्च आरभ्याणामारम्भकद्रव्यतादात्म्यादिति फलितः सूत्रार्थः। प्रत्यक्षेण तादात्म्येऽवगम्यमाने कस्तत्प्रतिरोधकस्तर्क इति भावः। व्याप्यव्यापकशब्देनानयोर्निर्देशस्तु-आरभ्यद्रव्ये आरम्भकद्रव्यान्वयनैयत्यस्य प्रत्यक्षसिद्धस्य ज्ञापनाय।

यद्वा-प्रथमसूत्रेण सर्वस्य परमात्मैकोपादानकत्वेऽभिधित्सितेऽर्थे द्वौ प्रतिवादावयतरतः। तत्रैकः-गुणमयस्यास्य सर्वस्य गुणमयं स्वतन्त्रमेकमुपादानं भवितुमर्हतीति।

टी-अपरस्तु—सर्वस्यार्थस्यैकमारम्भकं भवतीत्येतदेवानुपपन्नमिति। तत्र प्रथमा शङ्का पूर्वसूत्रेण परिहृता। अपरा त्वनेन परिह्रियते।

अयमाशङ्कितुरभिप्रायः-घटशरावादीनां बहूनां यदारम्भकं मृद्द्रव्यं तद्धि तानपेक्ष्य व्यापकं भवति, तस्य-मृद्द्रव्यस्य तेष्वनुगमेः। ते च घटशरावादयस्ततो मृद्द्रव्याद्व्याप्याः—न्यूना विशेषा भवन्ति। न हि मृद्द्रव्यानुबद्धोऽपि घटः शरावः, शरावो वा घटः। तदेकं चेद्बहूनां विशेषाणामारम्भकं, तदा तेन भाव्यं तान् व्याप्यानपेक्ष्य व्यापकेन। अत्यन्तविषमजातीयानामवनिसलिलदहनपवनविशेषाणामनुगतमेकं व्यापकं न हि घटेत। नाप्यत्यन्तविषमचिदचित्प्रपञ्चयोरिति॥

तत्राह-व्यापकत्वाद्व्याप्यानामिति। इह जगति यावन्तो व्याप्याः—विशेषास्तान् सर्वानपेक्ष्य व्यापकत्वात्परमात्मनः॥

अयम्भावः—ये नाम विशेषाः—वियदनिलानलसलिलावनयोऽन्ये च जडाजडराशयः, सर्वं पद्यानर्थ्यामिब्राह्मणोक्तरीत्या ब्रह्मात्मका एवेति सर्वप्रकारैरवस्थितः स एवेति सर्वविशेषरूपः स एवेति तानपेक्ष्य व्यापकता स्वेन रूपेणाक्षतैव तस्येति। प्रतिहतस्वतन्त्रप्रधानवादेन कापिलेनैव वा साङ्ख्यसूत्रेण समुद्भाव्यमानामाशङ्कां परिहरत्यनेन सूत्रेण। शङ्कातत्परिहारक्रमस्तु स एव॥ (२)॥

अथ निमित्तकारणत्वाशङ्का परिह्रियते। शङ्कापरिहारमुखेन निमित्तत्वोपपादनमस्य सूत्रस्य फलम्। नित्यं कमपीश्वरमसहमानानां कापिलानामियं शङ्का नन्वित्यादिनानूद्यते॥

प्राणिबुद्धिभ्य इति। अत्र बहुवचनं बलैश्वर्यादिलक्षणज्ञानविततिभेदनिबन्धनमित्यभिप्रेत्य तदर्थमाह- ज्ञानबलैश्वर्येभ्य इति। यो हि प्रकृतिचिन्तकः प्रलये प्रकृतौ मग्नः स पुनरुत्थितो ज्ञानबलैश्वर्यसम्पन्नोऽपि कर्मपरवशः प्राणीति न तस्य सामर्थ्यमिदं महदादिकार्यमखिलमारब्धुमिति भावः। तत्र प्रमाणमाह- श्रीमद्भागवतेत्यादिना॥ ३-१-४॥

कारणनिरूपणेऽयं प्रसङ्गः-पूर्वस्मिन् सूत्रे परिमितज्ञानशक्तिकानां ब्रह्मादीनां जगत्कारणत्वनिरसनमुखेन तस्यैव सर्वज्ञस्य सर्वशक्तस्य सङ्कल्पविशिष्टवेषेण निमित्तकारणत्वे ज्ञापिते शङ्केयमवतरति—यद्येवं देवादिविषमसृष्ट्या भगवतो नैर्घृण्यं स्यादिति। तत्रेदमुच्यते- न नैर्घृण्यं प्रत्युत कृपैवेति।

कथमीश्वरस्य परमकारुणिकस्य उच्चनीचविषमसृष्टिकर्तृत्वमित्यत्राह-तत्तत्कर्मानुसारेणेति।

ननु-भवतु सृष्टिः कर्मानुगुणा, तथा सृजतोऽस्य का कृपा? निपतितांस्तमसि ततो बहिरुपनयतीति तु कृपा। तथा चाहुराचार्याः-

"अविदविशेषितान् प्रलयसीमनि संसरतः
करणकलेवरैर्घटयितुं दयमानमना" इति।

वेदान् निर्ममे इति का कृपेत्याशङ्कां परिहरन् श्रुतेर्विशेषमाह-धर्मार्थेत्यादिना। हिताहितेति। हितावबोधनमादानाय, अहितावबोधनं हानाय। यथाधिकारमिति। सात्त्विकराजसतामसभेदेनोत्तममध्यमाधमांस्त्रिविधानधिकारिणोऽधिकृत्य यथाधि-

भा०—ननु—जीवेष्वप्युपचितपुण्याः केचित्तपोज्ञानबलैश्वर्यादिभिरधिकतरा दृश्यन्ते, ततश्च सिद्धगन्धर्वादयस्ततो देवास्तत इन्द्रादयस्ततो ब्रह्मादयः। अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे उपचितेन पुण्यविशेषेणैव प्रभूतमैश्वर्यं प्राप्तो जगत्सृष्टयादिकं करोतु। किं ? नित्येनेश्वरेणेति चेत्तत्राह—

## सू० न प्राणिबुद्धिभ्योऽसम्भवात् ॥ ३-१-४ ॥

प्राणिबुद्धिभ्यः—जीवात्मज्ञानबलैश्वर्येभ्यो, न—जगदुत्पत्त्यादिकं न जायते। कुतः ? असम्भवात्—ईश्वरव्यतिरिक्तानां केषांचिदपि जीवानां जगत्कर्तृत्वादि सामर्थ्यं न सम्भवतीति यावत्। उक्तं च-श्रीमद्भागवते द्वितीयस्कन्धे ब्रह्मणा नारदं प्रति—

" येन स्वरोचिषा विश्वं रोचितं रोचयाम्यहम्।
यथार्कोऽग्निर्यथा सोमो यथर्क्षग्रहतारका:॥

---

નનુ-શંકા, જીવવર્ગમાં પણ અતિ વૃદ્ધિ પામેલા પુણ્યવાળા કેટલાક તપ, જ્ઞાન, બળ અને ઐશ્વર્યાદિકથી અતિ અધિક દેખવામાં આવે છે, તેથી વળી અધિક સિદ્ધ અને ગન્ધર્વાદિક, તેથી વળી અધિક દેવતાઓ, તેથી પણ અધિક ઇન્દ્રાદિક દેવો અને તેથી અધિક બ્રહ્માદિક, એમ દેખાય છે.। માટે બ્રહ્માદિકમાંથીજ કોઇ એક દેવ એક એક કલ્પમાં વૃદ્ધિ પામેલા પુણ્યવિશેષથીજ બહુ મોટા ઐશ્વર્યને પામેલા હોય તે જગતની સૃષ્ટિ આદિક કરે !। નિત્યસિદ્ધ એક અનાદિ ઈશ્વરને માનવાથી શો વિશેષ છે ?। એમ જો તમે શંકા[1] કરતા હો તો ત્યાં કહે છે-

**પ્રાણીઓનાં બુદ્ધિબળાદિકથી ન થાય, અસંભવ છે માટે. ॥ ૩-૧-૪ ॥**

પ્રાણીઓના બુદ્ધિબળાદિકથી-જીવાત્માઓનાં જ્ઞાન, બળ, ઐશ્વર્યોથી, ન થાય-જગતની ઉત્પત્તિ આદિક નજ થાય.। શાથી ? અસંભવ છે માટે.। ઈશ્વર સિવાય બીજા કોઇ પણ જીવોને જગત્કર્તૃત્વાદિક સામર્થ્ય-ઐશ્વર્ય સંભવતું નથી એજ ખરો-છેલ્લો અર્થ છે.। શ્રીમદ્ભાગવતમાં દ્વિતીય સ્કંધમાં બ્રહ્માએ નારદ પ્રત્યે કહ્યું છે-"જે સ્વયંપ્રકાશ પરમાત્માએ પ્રકાશ કરેલા-સમષ્ટિરૂપે રચેલા વિશ્વને હું પ્રકાશકરૂં છું-વ્યષ્ટિરૂપે રચું છું.। જેમ-સૂર્ય, અગ્નિ, ચન્દ્રમા, તથા નક્ષત્ર, ગ્રહ અને તારાઓ આ વિશ્વને પ્રકાશ કરેછે તેમ.। સર્વના દ્રષ્ટા-સાક્ષી, સર્વના નિયામક, કૂટસ્થ અને સર્વના

---

૧- કોઇ એક નિત્યસિદ્ધ ઇશ્વરને નહિ ગ્રહન કરનારા કાપિલમતાનુયાયિઓની આ શંકા છે, માટે તેનું ખંડન સૂત્રકાર-શાંડિલ્યમુનિ પોતેજ કરેછે.।

भान्तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ।
सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिनोदितः ॥
सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः ।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृत् " ॥

इत्यादिवाक्यकदम्बैर्ब्रह्मादीनामीश्वराणामपि तदनुग्रहं विना स्वातन्त्र्येण जगत्कर्तृत्त्वादिकं निषिद्धम् । तथा महदादीनां जगत्कारणभूतानाम्–" महदहमादयोऽण्डमसृजन् यदनुग्रहतः " । इत्यत्र स्वातन्त्र्येण जगत्स्रष्टृत्वादिकं निषिद्धम् । तत्प्राणिनां का ? वार्तेति भावः ॥ ३–१–४ ॥

परमेश्वरस्य कारुण्यमाह—

## सू० निर्मायोच्चावचं श्रुतीश्च निर्ममे पितृवत् ॥ ३-१-५ ॥

परमकारुणिक आश्रितवात्सल्यैकजलनिधिरवाप्तसमस्तकामः सत्यसङ्कल्पः परमेश्वरस्तत्तत्कर्मानुसारेणोच्चावचं जगन्निर्माय धर्मा-

---

આત્મા–અન્તર્યામી, એવા તે પરમાત્માના ઇક્ષણાત્મક અનુગ્રહથી પ્રેરણા પામેલો અને તેમણેજ સર્જેલો હું સૃજ્ય-સર્જવા યોગ્ય જગત્‌ને સર્જું છું । આ પ્રમાણે તે પરમાત્માએ નિયોજન કરેલો–પ્રેરેલો હું જગત્‌ને સર્જું છું, તેમને વશ વર્તનારા શંકર સંહાર કરેછે અને સત્ત્વાદિક ત્રણેય શકિતના ધારક પરમાત્મા પુરૂષરૂપે–વિષ્ણુરૂપે આ વિશ્વનું પરિપાલન કરેછે. " । ઇત્યાદિક વાકયસમૂહોથી બ્રહ્માદિક ઇશ્વરોને પણ તે પરમાત્માના અનુગ્રહ સિવાય સ્વતંત્રપણાથી જગત્કર્તૃત્વાદિક સામર્થ્યનો નિષેધ કરેલો છે. । તેમજ જગત્‌નાં કારણભૂત મહત્તત્ત્વાદિકને પણ–"મહદહંકારાદિક તત્ત્વ જે પરમાત્માના અનુગ્રહથીજ અંડને સર્જી શકેછે. "। એ વેદસ્તુતિના પદ્યમાં સ્વતંત્રપણે જગત્સ્રષ્ટૃત્વાદિકનો નિષેધ કરેલો છે.। તો પછી પ્રાણીઓની તો વાર્તાજ શી કરવી ? એ અભિપ્રાય છે. ॥ ૩–૧–૪ ॥

હવે–તે જગત્કર્તા પરમેશ્વરનું કારૂણ્ય કહેછે.—

**ઉચ્ચ–નીચ** જગત્ નિર્માણ કરીને વેદોનું પણ નિર્માણ કર્યું, પિતાની પેઠે. ॥ ૩–૧–૫ ॥

**પરમ** કારૂણિક, આશ્રિતો ઉપર વાત્સલ્યના તો એક–અદ્વિતીય જળનિધિસમા, સમસ્ત ઇચ્છાઓના અંતને પામેલા અને સત્યસંકલ્પ એવા પરમેશ્વર, તે તે પ્રાણીઓનાં કર્માનુસારે ઉચ્ચનીચ–ભાવવાળું જગત્ નિર્માણ કરીને ધર્મ, અર્થ, કામ અને મોક્ષ નામે પ્રસિદ્ધ ચારેય પુરૂષાર્થ પ્રાપ્ત કરાવવા માટે હિતાહિતનું સમ્યક્ અવબો

भा-र्थकाममोक्षाख्यपुरुषार्थचतुष्टयं प्रापयितुं हिताहितावबोधकान् वेदान्निर्ममे। तत्र दृष्टान्तः-पितृवत्। यथा पिता उत्तममध्यमाधमान् पुत्रानुत्पाद्य हिताहितोपदेशेन व्यवहारशिक्षादिना वृत्त्यादिदानेन चताननुगृह्णाति, तथेश्वरोऽपि यथाधिकारं धर्मानुपादिशन्ननुगृह्णातीत्यर्थः ॥ ३-१-५ ॥

ननु—कथं पितृसमत्त्वमित्याशङ्क्य परिहरति-मिश्रेति ॥

**सू० मिश्रोपदेशान्न तथेति चेन्न स्वल्पत्त्वात् ॥ ३-१-६ ॥**

ईश्वरस्य मिश्रोपदेशात्-हिताहितरूपमिश्रोपदेशकर्तृत्त्वात्तथा न-ईश्वरः पितृवन्न भवतीति चेन्न, स्वल्पत्त्वात्—उपदेशे योऽहित इत्युत्प्रेक्ष्यते तस्यात्यल्पत्त्वात्। श्रेयोंऽशापेक्षयाल्यल्पो हि तदितरतया सम्भाव्यमानः। इदमेव युक्तं विविधाधिकारिपरिपूर्णे प्रपञ्चे, तत्र पितृवदिति व्याहतम्। उदाहरणमिदं लोकतः। वस्तुतस्तु ततोऽयमभ्यधिकः ॥ ३-१-६ ॥

---

धन करनारा वेदोने निर्माण कर्या। तेमां दृष्टान्त कहे छे-पितानी पेठे, जेम पिता पोते उत्तम, मध्यम अने अधम-कनिष्ट पुत्रोने उत्पन्न करीने हिताहितनो उपदेश करवाथी, व्यवहार शिखवाडवाथी, तेमज आजीविका आपीने पण तेमना उपर अनुग्रह करेछे, तेज प्रमाणे जगत्कर्ता ईश्वर पण वेदादिक सच्छास्त्रद्वारा यथाधिकार धर्मनो उपदेश करता थका प्राणीओने अनुग्रह करेछे ए अर्थ छे. ॥ ३-१-५ ॥

नतु-शंका-(परमेश्वरनुं) पिताने तुल्यपणुं केम कहेवाय? एम आशंका उठावीने परिहार करेछे—

**मिश्र उपदेश छे माटे तेवा नहि, तो के नहि, (तेनी) अति अल्पता छे माटे. ॥ ३-१-६ ॥**

परमेश्वरनो मिश्र उपदेश छे माटे—हित, अहित एवो मिश्र उपदेश करे छे, तेथी तेवा नहि-एटले के परमेश्वर पिताने तुल्य न थाय, एम जो तमे कहेता हो, तो के नहि, तेनुं स्वल्पत्व छे तेथी-एटले के-उपदेशमां जे अहितरूप छे एम उत्प्रेक्षा—कल्पना कराय छे, तेवा उपदेशनुं अति अल्पत्व छे माटे. । हितरूप श्रेयोभागनी अपेक्षाए तेथी इतरपणे संभावना करातो अहितरूप भाग अति अल्पज छे. । विविध अधिकारीथी भरेला आ प्रपंचमां-संसारमां आ प्रमाणे होवुं एज युक्त छे, तेथी पिताने तुल्य एम कह्युं ते खोटुं नथी.। अने वळी-आ उदाहरण लोकनी अपेक्षाए कह्युं छे, पण वस्तुताए तो परमेश्वर तेथी अति अधिकज छे. ॥३-१-६॥

टी-कारमित्यर्थः। इममेव चार्थमव्यवहितेन सूत्रेण व्यक्तीकरिष्यति सूत्रकारः। धर्मानिति। निवृत्तिधर्मान् सात्त्विकैकान्तान्। प्रवृत्तिधर्मांश्च-राजसतामससाधारणान्। अनुगृह्णातीति। अनेन पितृवदिति दृष्टान्तग्रहणसिद्धं कारुण्यफलमुक्तं भवति ॥ ३-१-५ ॥

कथं पितृसमत्वमिति। रजस्तमःप्रधानान् प्रत्यविशेषेण प्रवृत्तस्य वेदस्य प्रकाशने प्रत्युतापकार एव कृतः स्यान्न तूपकारः। तत्कथमुच्यते ? पितृवदित्याशयः॥

मिश्रोपदेशादित्येतद्व्याचष्टे-हिताहितेति। हितमनुकूलम्। हितादन्यत्प्रियमहितमुच्यते। त्रिविधा ह्युपदेशाः प्रवर्त्तन्ते वेदेषु—

केचिद्धितैकपराः—" तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" ॥ " नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ' इत्याद्याः। केचित्तु—नैकान्ततोऽनुकूलाः,नैकान्ततः प्रियाश्च, किन्तु मिश्राः—य इमे देहात्माभिमानाद्विपरीतात्मतिनिवर्त्य स्थिरात्मबुद्धिमापाद्योत्तरमभ्यर्हितगतिकामनाधानमुखेन तत्तत्साधनेषु धर्मेषु प्रवर्त्तयन्ति ते। केचित्तु—प्रियैकपराः-विना शत्रोः प्रमथनं क्रोधस्यान्तमपश्यतां परप्रमथनोपायं तत्प्रियमात्रमावेदयन्तो ये प्रवर्त्तन्ते अभिचाराद्युपदेशाः। तदयं वेदस्तत्तदिच्छानुगुणं प्रवर्त्तमानः कथं हितपरस्योपदेश स्यात्, उपदेष्टा चास्येश्वरः कथं? पित्रादिवद्धितपरोऽनुग्राहकः स्यादित्याशयः। समाधत्ते- स्वल्पत्वादित्यादिना। योऽहित इत्युत्प्रेक्ष्यते इति। प्रिय इति विभाव्यत इत्यर्थः। अत्यल्पत्वादिति। कथमत्यल्पता? तत्राह-श्रेयोंऽशापेक्षयेति।

अयम्भावः-यस्तु तीव्रक्रोधवेगः शत्रोः प्रमथनं विना क्रोधवेगप्रशमनोपायमपश्यंस्तदुपायं मार्गते, तं मूर्खपुत्रन्यायेन दृष्टात्यन्तानर्थात् सद्योहननव्यापारात्-अनेनोपायेनाभिचारेण यतस्व अनेनादृष्टेन शत्रोस्ते जीवनादृष्टप्रक्षयावहतदीयदुरितोत्कर्षोद्भवेन स स्वयमेव नंक्ष्यति, त्वमपि लोकतो नात्यनर्थभाग्भवेः, इत्युपदिश्य निवर्त्तयन्नुपकरोत्येव। तत्र यत्तस्येच्छां सर्वात्मना न प्रतिरुणद्धि, अनुसरत्यंशतः, तत्त्वत्यल्पमाधीयमानादत्यन्तविषमप्रवृत्तिप्रतिरोधनलक्षणादुपकारात्। एवमेव यः पुनर्विषयरुचिस्तं निन्द्यनिहीनविषयेभ्यो निवर्त्य नियमयति-विषयविशेषे, येनायमधोऽधो न पतेत्। तत्राप्याधीयमानोपकारदृष्ट्यात्यल्पमेव तत्कामनानुविधानम्।

वस्तुतस्तु-परार्थाविरोधेन स्वार्थं कामयमानानां कामितार्थप्रदानमिति तु गुण एवेति। इदमेव युक्तमिति। यदि हिततमं निवृत्तिमार्गमेवोपदिशेदनधिकाराः शास्त्रतो विमुखा अनियमितवृत्तयो यथायथं प्रवर्त्तमाना लोकद्वयतोऽप्यनर्थमेव संश्रयन्तः पतेयुरन्धे तमसि, समुच्छिन्न एव स्याल्लोकव्यवहारोऽपीति भावः ॥

केचित्तु-पशुविशसनलक्षणपापगर्भयागविधानात् कथं ? पित्रादिवद्धितपरोऽयं स्यादित्याशङ्कार्थमाश्रित्य तत्र यागे या समधिकतरपुण्याधायकता, तद्दृष्ट्या न पापाधायकता, नात्यनर्थरूपा च पापस्यात्यल्पत्वात्। प्रबलतरस्वर्गसुखानुभववेलायां विशसनफलं दुःखमन्तरान्तरानुभूयमानमत्यल्पमिति परिहारवाक्यस्यार्थं वर्णयन्ति। अत्र अभिचारविधानकलङ्काशङ्का न परिहृतास्मिन् पक्षे। तदियमेव व्याख्या समुचिता नः प्रतिभाति ॥ ३-१-६ ॥

भा-सकलफलप्रदत्त्वलक्षणमपरमैश्वर्यमाह—फलमिति ॥

सू० फलमस्माद्दृष्टत्वादिति बादरायणः ॥ ३-१-७ ॥

इति श्रीभक्तिमीमांसाशास्त्रस्य श्रीशाण्डिल्यमुनिप्रणीतस्य भक्तिसूत्रस्य तृतीयाध्यायस्य प्रथममाह्निकम् ॥ ३-१ ॥

विहिताविहितकारिणां जीवानां विहिताचरणसन्तुष्टादविहिताचरणरुष्टादस्मादीश्वरादेव तत्तोपरोपद्वारा सुखदुःखादिरूपं फलं भवतीति बादरायणो-भगवान् वेदव्यासो मन्यते। तत्र हेतुर्दृष्टत्वात् — दृष्टं हि प्रजानां राजशासनतद्भङ्गकारिणां तदाचरणजनिततोपरोपभाजो राज्ञ एव सकाशात् प्रसाददण्डाविति। तद्वदत्रापीति ॥३-१-७॥

इति श्रीपरभक्तिसमाराध्यभगवत्सहजानन्दपरमानुग्रहपात्रभूत-सकलविद्वज्जनसाधुजनपूजित-सद्गुरुवर्य श्रीनित्यानन्दमुनि-विरचिते श्रीशाण्डिल्यसूत्रभाष्ये तृतीयाध्यायस्य प्रथममाह्निकम् ॥ ३—१ ॥

---

(પરમેશ્વરના ઐશ્વર્યપ્રતિપાદનનો પ્રસંગ હોવાથી) સર્વને સર્વ કર્મનાં ફળ આપનાર હોવાપણારૂપ બીજું ઐશ્વર્ય કહે છે—

(કર્મનાં) ફળ એ પરમેશ્વર થકીજ જોવામાં આવેછે માટે. એમ બાદરાયણ (માને છે.) ॥ ૩-૧-૭ ॥

ઇતિ શ્રીભક્તિમીમાંસારૂપ શ્રીશાણ્ડિલ્યમુનિપ્રણીત ભક્તિસૂત્રના તૃતીયાધ્યાયનું પ્રથમ આહ્નિક સમ્પૂર્ણ થયું. ॥ ૩-૧ ॥

શાસ્ત્રમાં વિધિનિષેધરૂપે પ્રતિપાદન કરેલાં કર્મ કરનારા જીવાત્માઓને, વિહિતનું આચરણ કરવાથી સન્તુષ્ટ થયેલા અને અવિહિત-નિષિદ્ધનું આચરણ કરવાથી રોષ પામેલા એવા એ પરમેશ્વર થકીજ તેમના સન્તોષ અને રોષદ્વારા સુખદુઃખાદિકરૂપ ફળ પ્રાપ્ત થાય છે, એમ બાદરાયણ-ભગવાન વેદવ્યાસ માનેછે. । તેમાં હેતુ-જોવામાં આવેછે તેથી-લોકોમાં પ્રજાઓને જોવામાં આવેછે કે-રાજાની આજ્ઞા પાળનાર અને ભંગ કરનારને,તેમ કરવાથી ઉત્પન્ન કરેલા સન્તોષ અને રોષ પામેલા રાજા થકીજ પ્રસાદ અને દણ્ડ મળેછે, તેની પેઠેજ આમાં પણ જાણવું. ॥ ૩-૧-૭ ॥

ઇતિ શ્રી પરભક્તિસમારાધ્યભગવત્સહજાનન્દપરમાનુગ્રહપાત્રભૂત—સકળવિદ્વજ્જનસાધુજનપૂજીત-સદ્ગુરુવર્ય શ્રીનિત્યાનન્દમુનિ-વિરચિતે શ્રી શાણ્ડિલ્યસૂત્રભાષ્યે તૃતીયાધ્યાયસ્ય પ્રથમમાહ્નિકમ્ સમાપ્તમ્ ॥ ૩-૧ ॥

टी-सकलजगदभिन्ननिमित्तोपादानत्वलक्षणैश्वर्यनिरूपणप्रसङ्गेन सर्वोपलेव्यमैश्वर्यान्तरमाहेति यावत्। विहिताविहितेत्यादि।

आहुः केचित् क्रियाजन्यमपूर्वं कर्तृसंश्रयम्।
स्थिरं कालान्तरे स्वर्गपुत्रादिफलसाधनम्॥
श्रुतेः स्वत प्रमाणत्वं स्थापयन्तोऽप्यमी पुनः।
देवतासु प्रमाणानि न पश्यन्ति कृतश्रमा॥
देवतावादिवाक्यानि तत्र तत्र श्रुतान्यपि।
स्वार्थतात्पर्यशून्यानि मन्यन्ते नयकोविदाः।
आलम्ब्य विधिशेषत्वं नयन्ति च कथञ्चन।
परमेश्वरयाथात्म्यविज्ञानरहिताः परे॥
तत्तत्कर्मसमाराध्यैरग्नीन्द्रवरुणादिभिः।
प्रसन्नैः कर्मणां काले फललाभं प्रचक्षते॥
ये तु सर्वान्तरात्मानं परमात्मानमीश्वरम्।
त्र्यय्यन्तैः पतिपद्यन्ते तस्मादेवाखिलं फलम्॥
स हि सर्वतनुः श्रीमानाराध्यः सर्वकर्मभिः।
स्वतनोरर्चनातुष्टः फलं तत्तत्प्रयच्छति॥
श्रूयते स्मर्यते वापि चोदना याखिलापि सा।
तस्यैव शासनं तस्माद्योऽसौ तामनुवर्तते॥
स तत्प्रसादपात्रं स्याद्विपरीतस्तु निग्रहम्।
राजभृत्येषु दृष्टोऽयं क्रमः सोऽत्रापि वर्तते॥
तत्प्रसिद्धमिमं पक्षं परित्यज्य कुयुक्तिभिः।
अपूर्वं कल्प्यते यैस्तु कथं ? ते वैदिका अपि"॥

इदमधिकं सूत्रं व्याख्यातृभिरपरैः पठ्यते—

## सू० व्युत्क्रमादप्ययस्तथा हि दृष्टम्॥ इति॥

अस्य चायमर्थः--सृष्टिक्रमविपर्ययेणाप्यय उपादेयानामुपादाने भवति। दृष्टं च लोकेऽपि घटशरावादीनां मृदि। आह्निकस्यारम्भे यदुपादानत्वं प्रस्तुतं तदेवाह्निकान्ते लयनिरूपणेनोपसंहृतम् इति बोध्यम्। निमित्तकारणनिरूपणप्रसङ्गेन तु प्राक्तनानि सूत्राणि प्रासङ्गिकाणीत्यपि बोध्यम्॥ ३-१-७॥

इति श्रीपरमसद्गुरु श्रीनित्यानन्दमुनिशिष्य-कृष्णजीवनदासमुनिविरचितायां शाण्डिल्यसूत्रभाष्यटीकायां भक्तितत्त्वप्रकाशिकायां तृतीयाध्यायस्य प्रथममाह्निकम्॥ ३-१॥

# श्रीस्वामिनारायणो विजयतेतराम्।

## द्वितीयमाह्निकम्—

भा-भक्त्येकतोष्यं भक्त्यर्च्यं भक्तिध्येयपदाम्बुजम्।
भक्त्यात्मानं नमामीशं धर्मयुग्भक्तिवल्लभम् ॥१॥

एवं तृतीयाध्यायस्य प्रथमाह्निके भजनीयं स्वरूपं निर्णीतम्, ततश्च मायाद्यास्तच्छक्तय उक्ताः, तासां तदात्मकत्वमुक्तम्, ब्रह्मादीनां जगत्कर्तृत्वं निषिद्धम्, मातृपितृसहस्रेभ्योऽपि परमात्मनो वत्सलतरतोक्ता, भगवतः कर्मफलप्रदातृत्वं चोक्तम् ॥

अथ जीवात्मनां परमात्मनः पृथग्भावाभावं स्वरूपावैषम्यमित्याद्याह—

**सू० वस्तुतस्तदेकत्वं नानात्वमुपाधितः ॥ ३-२-१ ॥**

तेन—परमात्मना, सह जीवात्मनामेकत्त्वम्-अपार्थक्यम्—अपृथक्स्थितिर्वस्तुतो भवति। तदेव तत्त्वमित्येतत्। नानात्त्वम्—"अहमन्योऽयमन्य" इति पृथक्सत्ता तु प्रतीयमाना, उपाधितः-पूर्वपूर्वकर्मलक्षणोपाधिकृतः, अविद्ययेत्येतत्।

---

આહ્નિક-૨ જું—

પરા-એકાન્તિકી ભકિતથીજ એક પ્રસન્ન કરવા યોગ્ય, મૂર્તિમતી ભકિતદેવીએ પરમ પ્રેમથી પૂજવા યોગ્ય, ભકિતદેવીએ સદાય ધ્યાન કરવા યોગ્ય છે પાદપદ્મ જેમનું, ભકિતદેવીના આત્મસ્વરૂપ—અન્તર્યામી અને ધર્મદેવે સહિત ભકિતદેવીના અતિ વહાલા પુત્ર એવા સર્વનિયામક શ્રીહરિને હું નમસ્કાર કરૂંછું. ॥ ૧ ॥

આ પ્રમાણે ત્રીજા અધ્યાયના પહેલા આહ્નિકમાં ભજનીય સ્વરૂપ પરમાત્માનો નિર્ણય-નિશ્ચય કર્યો, તે પછી માયાદિક તે પરમાત્માની શકિતઓ કહી, તે શકિતઓની તદાત્મકતા કહી, બ્રહ્માદિક દેવોનું જગત્કર્તાપણું નિષેધ કર્યું, હજારો હજાર માતા-પિતા કરતાં પણ પરમાત્માની અતિશય વત્સલતા કહી, તેમજ ભગવાનનું કર્મફળ-પ્રદાતાપણું પણ કહ્યું।

હવે-જીવાત્માઓને પરમાત્મસ્વરૂપ થકી પૃથગ્ભાવનો અભાવ એટલે સ્વરૂપથી અવૈષમ્ય છે, એ આદિક કહે છે—

**વસ્તુતાએ તેની (પરમાત્માની) સાથે એકત્વ (અવૈષમ્ય) છે, નાનાત્વ (વિવિધતા) ઉપાધિને લીધે છે. ॥ ૩-૨-૧ ॥**

તે પરમાત્માની સાથે જીવાત્માઓનું એકત્વ-અપૃથક્તા-અપૃથક્સ્થિતિજ વસ્તુતાએ છે।

भा–केचित्तु–तस्य–परमात्मनः, एकत्त्वमेव–स्वरूपैक्यमेव, न स्वरूपे भेदः, सङ्कर्षणप्रद्युम्नादिरूपेण भेदस्तु स्वेच्छया सृष्ट्यादिकार्योपाधिनिमित्तक इति व्याचक्षते ॥ ३–२–१ ॥

पृथग्भावमाशङ्क्य परिहरति—

## सू० पृथगिति चेन्न परेणासम्बन्धात् प्रकाशानाम् ॥ ३–२–२ ॥

जीवात्मानः परमात्मनः पृथगेव स्युरिति चेन्न । परेण—परमात्मना, प्रकाशानाम्—जीवानाम्, आसम्बन्धात्—अत्यन्तसम्बन्धात्–गाढसम्बन्धात् । तच्छ्रुतेरित्येतत् । "यस्यात्मा शरीरम्" । "अन्तः प्रविष्टः शास्ता जनानाम्" । "सर्वं समाप्नोपि ततोऽसि सर्वः" । इति हि श्रुतिस्मृती ॥ ३–२–२ ॥

ननु–जीवात्मनामीश्वरसम्बन्धो नित्यः, स्वतश्चाविषमास्तर्हि कुत ? एतेषां संसृतिरित्याशङ्क्याह—मन इति ॥

---

અને એમ હોવું એજ તત્ત્વ–ખરી વાત છે. । અને નાનાત્વ–હું જુદો છું, આ જુદો છે, એમ પૃથક્સત્તા જણાય છે, તે તો ઉપાધિથી–પૂર્વ પૂર્વ કર્મરૂપ ઉપાધિકૃત છે. । અને તે અવિદ્યા–અજ્ઞાનને લીધેજ છે. એમ જાણવું.।

કેટલાક તો–આ સૂત્રનું વ્યાખ્યાન–તે પરમાત્માનું એકત્વજ–સ્વરૂપથી ઐક્યજ છે, પરંતુ–નહિ કે સ્વરૂપમાં ભેદ છે. । અને સંકર્ષણ–પ્રદ્યુમ્નાદિકરૂપે ભેદ તે સ્વેચ્છાધીજ સૃષ્ટિ આદિક કાર્યરૂપ ઉપાધિનિમિત્તકજ છે. આ પ્રમાણે કરેછે ॥ ૩–૨–૧ ॥

જીવાત્માઓનો પૃથગ્ભાવ છે, એમ આશંકા ઉઠાવીને તેનો પરિહાર કરેછે—

**જુદા છે, તો કે નહિ, જીવાત્માઓનો પર–પરમાત્માની સાથે ગાઢ સમ્બન્ધ છે માટે. ॥ ૩–૨–૨ ॥**

જીવાત્માઓ પરમાત્માથી જુદાજ છે, એમ જો કહેતા હો તો કે નહિ, પર–પરમાત્માની સાથે પ્રકાશસ્વરૂપ જીવાત્માઓનો અત્યન્ત–ગાઢ સંબંધ છે માટે. । તે બાબત શ્રુતિથીજ સિદ્ધ છે, એ નિશ્ચિત છે. । જુઓ–"આત્મા જેનું શરીર છે." । "જનોના–પ્રાણીઓના અન્તરમાં પ્રવિષ્ટ થકા નિયમન કરનારા છે." । "સર્વને સમ્યક્ પ્રકારે પામેલા–વ્યાપીને રહેલા છો તેથીજ સર્વરૂપ છો." । આ પ્રમાણે શ્રુતિસ્મૃતિ કહેછે. ॥ ૩–૨–૨ ॥

નનુ-શંકા, જીવાત્માઓને ઇશ્વરની સાથેનો સંબંધ નિત્ય છે અને સ્વતઃ–સ્વરૂપથી અવિષમ છે, તો એ જીવાત્માઓને સંસૃતિ કેમ ? ક્યાંથી ? અને કયારે? અથવા શાથી ? એમ આશંકા ઉઠાવીને કહે છે—

टी-वृत्तानुवादपूर्वकं वर्तिष्यमाणमाह—एवमिति । पृथग्भावाभावमिति । पूर्वाह्निके परमात्मनः स्वरूपं निरूपयता सकलजगदुपादानत्वोपजीव्यमद्वितीयत्वं निरूप्य तत्समर्थनाय प्रकृतेरपि तच्छक्तित्वेन तदपृथग्भावः समर्थितः । इदानीं जीवात्मनां तथात्वं समर्थनीयं नान्य, तत्सङ्गतोऽयं विचारः पूर्वेणेति भावः ॥

स्वरूपैक्यभ्रमं व्यावर्त्तयन् व्याचष्टे-अपार्थक्यमिति । तस्यैव विवरणम्-अपृथक्स्थितिरिति । सा च शरीरशरीरिभावात् । न चामुख्यार्थता, संश्लेषविशेषेऽपि ह्यैक्यशब्दः स्वारसिकः प्रवर्त्तते-नीरक्षीरयोरैक्यमभूदित्यादौ । अन्यत्र प्रपञ्चितमेतत् । केचित्त्विति । उत्तरसूत्रसन्दर्भानौचित्यं प्रकरणाननुगुणत्वं चेत्यस्वारस्यं व्यज्यते ।

अयमपरः सूत्रस्यास्य पाठः-"तदेकत्वं नानात्वैकत्वमुपाधियोगहानादादित्यवत्" इति । अयमर्थः-जीवात्मनां न परमात्मनः पृथक्स्थितिः, किन्तु-तेन सह एकत्वमेव-अविभाग एव । एवं यच्च नानात्वम्-सुरनरतिर्यक्स्थावरादिभावेष्वालक्ष्यमाणं वैषम्यम्, तत्तु उपाधियोगात्-कर्मकृतप्रकृतिसंसर्गयोगात् । तद्धाने तु एकत्वमेव-अवैषम्यमेव । सुखदुःखादिवैचित्र्यस्याप्यपगमात् । तत् वैषम्यावैषम्यलक्षणनानात्वैकत्वे उपाधियोगतदभावकृते । आदित्यवत्-यथा ह्यादित्यः प्रकाशमयः उदयन्नस्तमयंश्च रक्तो विपुलबिम्बश्च दृश्यते, मध्याह्ने ईषन्नीलः शुक्लभास्वरो नातिविपुलबिम्बश्च । तदेवं तस्य यद्वैषम्यमुपलभ्यते तदुदयाद्युपाधिकृतम् । वस्तुतः—यथेदानीं गृह्यते न तथा परिमितपरिमाणः, नापि रक्तादिविषमरूपश्च, किन्तु सदैकरूप एव । अपगतोपाधिदोषाणां तु एकरूप एवोपलभ्येत ।

यद्वा-मणिकृपाणादौ ह्रस्वदीर्घत्वादिविषमाकारो भवति, मणिदर्पणाद्युपाध्यपगमे तु स्वस्वरूप एवैति ।

को नु सूत्रकृतां हार्दमीष्टे स्पष्टं समीक्षितुम् ।
अथापि विदुषामेषा प्रौढिस्तन्नयने तु या ॥
स्वसिद्धान्तानुगुण्येन प्रवृत्ता सापि शोभते ।
भक्तिसूत्रकृता साकं भक्तिमार्गानुयायिनाम् ॥
ऐककण्ठ्यं तु तत्त्वांशे स्थाप्यमानं तु यत्नतः ।
मतानुपपत्तिमात्रेण पूर्वपक्षमिति मीर्न नः ॥ ३-२-१ ॥

आसम्बन्धादिति पदच्छेदमभिप्रेत्य व्याचष्टे-आसम्बन्धादिति । अत्यन्तेति । "य आत्मनि तिष्ठन् आत्मनोऽन्तरः" इत्यनेन येयमन्तर्बहिर्व्याप्तिरुक्ता सेह विवक्षितेत्यभिप्रायेणाह- अत्यन्तसम्बन्धादिति । केचिद्व्याख्यातारः परेण सम्बन्धादिति पाठमाश्रित्यैवमेव व्याचक्षते ।

अयमपरो व्याख्याक्रमः-ननु—आत्मानः स्वतोऽविषमा एवेत्येतन्न, किन्तु—सुखदुःखादिवैचित्र्याकारभेदात्, देवमानुषाद्याकारभेदाच्च तदनुरूपव्यापनतारतम्येण पृथगेव-अत्यन्तविषमाकारा एवेति चेन्न । प्रकाशानाम्-प्रकाशैकरूपाणां स्वरूपे स्वतः सुखदुःखादिवैषम्यस्य, देवाद्याकारवैषम्यस्य चासम्बन्धादिति ॥ ३-२-२ ॥

यदुक्तमुपाधियोगादिति प्रथमसूत्रे तमेवोपाधियोगमस्मिन् सूत्रे विशदयति । तदिदमवतार्यते-जीवात्मनामिति । नित्य इति । शरीरिशरीरभावकृत इति यावत् । स्वतश्चाविषमा इति । ज्ञानानन्दैकस्वरूपा इत्यर्थः ।

## सू० मनोऽतत्त्वव्यवहारः ॥ ३–२–३ ॥

भा—मन इति । " प्राणेन्द्रियमनोबुद्धिसङ्घातः सूक्ष्मसंज्ञितम् । शरीरम्"। तच्च मनः–मनःप्रधानम् । तच्च मनः सत्त्वरजस्तमोगुणसम्बन्धेन जीवस्य कुशलाकुशलानि कर्माणि कारयति, तदनुसारेणोच्चनीचदेहान् प्रापयति, अतस्तत्कृतो जीवस्य संसारो, न वस्तुतः । कुतः ? अतत्त्वव्यवहारः—मनःकृतो जीवे संसारोऽतत्त्वव्यवहारः–नैसर्गिको न भवतीत्यर्थः । तदुक्तम् श्रीमद्भागवते रहूगणं प्रति जडविप्रेण—
" यावन्मनो रजसा पुरुषस्य सत्त्वेन वा तमसा वानुरुद्धम् ।
चेतोभिराकूतिभिरातनोति निरङ्कुशं कुशलं चेतरं वा ॥
स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ।
बिभ्रत्पृथङ्नामभीरूपभेदमन्तर्बहिष्ट्वं च पुरैस्तनोति ॥
सुखं दुःखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा स्वे देहिनं संसृतिचक्रकूटः ॥

---

**મનઃકલ્પિત સંસાર છે, વાસ્તવિક નથી. ॥ ૩-૨-૩ ॥**

"પ્રાણ, ઇન્દ્રિયો, મન અને બુદ્ધિ, એમના સંઘાતરૂપ સૂક્ષ્મ નામે શરીર છે." । તે સૂક્ષ્મ શરીર મનરૂપ–મનઃપ્રધાન છે. । અને તે મન સત્વ, રજ અને તમોગુણના સંબન્ધે કરીને જીવને સારાં નરસાં કર્મ કરાવેછે અને તેને અનુસારે ઉચ્ચ—નીચ દેહને પમાડેછે. । માટે તે **મનઃકૃત** સંસાર જીવને વળગેલો છે, પણ વસ્તુતાએ–તાત્વિક રીતે નથી. । શાથી ? તો કે–**अतत्त्वव्यवहारः** મનઃકૃત સંસાર જીવને વિષે ખરી રીતે તાત્વિક દૃષ્ટિએ નથી, એટલે કે સ્વાભાવિક નથી, એ અર્થ છે. । તે શ્રીમદ્ભાગવતમાં રહૂગણ રાજાના પ્રત્યે જડવિપ્રે કહ્યું છે–"જ્યાં સુધી પુરૂષનું–જીવાત્માનું મન રજોગુણ, સત્વગુણ, તેમજ તમોગુણથી વ્યાપ્ત–વિક્ષિપ્ત રહેછે, ત્યાં સુધી જ્ઞાનેન્દ્રિયોથી તેમજ કર્મેન્દ્રિયોથી નિરંકુશ થકો–સ્વચ્છંદપણે સારાં કે નરસાં કર્મ કર્યાજ કરે છે. । વાસનાને આધીન મનવાળો હોવાથી તે જીવાત્મા વિષયોમાં અનુરકત થઇને ગુણને આધીન સ્થિતિ-પ્રવૃત્તિ વાળો, માટેજ કામાદિક વિકારવાન થકો, પંચભૂત અને અગીયારેય ઇન્દ્રિયોમાં પ્રધાનભૂત એવા મનથી, જુદાં જુદાં નામવડે દેવમનુષ્યાદિક રૂપભેદને ધારણ કરતો થકો, અનેક શરીરોથી આત્માને–પોતાને ઉચ્ચ–નીચ ભાવને પમાડે છે. । પ્રકૃતિના પરિણામરૂપ એવું મન કર્માનુગુણ સમય સમય પ્રમાણે દુર્નિવાર એવું સુખ, દુઃખ અને તીવ્ર શોકમોહાદિકરૂપ ફળ સર્વ પ્રકારે આ જીવાત્માને પ્રકાશ કરી આપે છે–અનુભવાવે છે. માટે મનજ આ પ્રમાણે દેહી–જીવાત્માને પોતામાં સંબંધ કરાવીને સંસૃતિચક્રમાં ક્લેશ પમાડે છે.। અને આ મનોમય–મનના વિલસરૂપ, જાગ્રત્સ્વપ્નમાં જણાતા વ્યવહારરૂપ આ સઘળો સંસાર જ્યાં સુધી મન છે ત્યાં સુધી ક્ષેત્રજ્ઞ–જીવાત્માને સદાય પ્રત્યક્ષ વર્ત્યાં કરેછે. ।

भा–तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः।
तस्मान्मनो लिङ्गमदो वदन्ति गुणागुणत्वस्य परावरस्य ॥
गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्त्तिमश्नन् शिखाः सधूमा भजति ह्यन्यदा स्वम् ॥
एवं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्व"मिति ।
" मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं तथे"ति ॥
भागवते च—
" चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये " ॥ ३–२–३ ॥
एतदेव स्पष्टयति—नेति ।

## सू० न विकारिणस्तु करणविकारात् ॥ ३—२—४ ॥

तुः शङ्कितव्यावर्त्तकः । आत्मानो न विकारिणः-सुखदुःखमोह-प्रमादादिभिर्न विकारिणो भवन्ति । ते ह्यन्तःकरणविकाराः॥३-२-४॥

---

( વળી આ મન બન્ધનમાં જેમ કારણ છે, તેમ મોક્ષમાં પણ એજ કારણ છે, એમ કહે છે– ) માટે આ મન છે તેજ જીવાત્માને ઉત્તમતા અને અધમતા એ રૂપ ગુણસંબંધથી રહિત મોક્ષસ્થિતિનું અને ગુણાભિમાનથી થતા સંસારનું લિંગ–કારણ છે, એમ કહેવામાં આવે છે. । આ મન જો ગુણના વિકારભૂત વિષયોમાં આસકત થાય તો પ્રાણીઓને કલેશમય સંસાર આપનારૂં થાયછે. અને જો ગુણસંબંધથી રહિત–નિર્વિષય થઇ જાય છે તો અભય પદ આપનારૂં થાયછે. જેમ–દીવો ઘીવાળી દીવેટનું ભક્ષણ કરતો હોય ત્યારે તેમાંથી ધૂમાડાવાળી શિખાઓ–જ્વાળાઓ નીકળેછે અને જ્યારે ઘી અને દીવેટ વિગેરે ઉપાધિ નિવૃત્તિ પામે છે ત્યારે અગ્નિ સ્વસ્વરૂપને પામેછે. । તેજ પ્રમાણે ગુણકર્મથી વિષયોમાં બન્ધાયેલું મન પોતા સાથે અગીયારેય ઇન્દ્રિયોની વૃત્તિઓને આશરે છે. અને તેમાંથી છુટેછે ત્યારે સત્ત્વપ્રચુરતા પામીને તત્ત્વભાવે વર્તેછે. "॥

" મનુષ્યોને બન્ધમાં અને મોક્ષમાં કારણ ખરી રીતે મનજ છે. મન જો વિષયોમાં ચોટે છે તો જીવને બન્ધનું કારણ થાયછે. અને વિષયોથી વિરકત થાય છે તો મુકિતનું કારણ થાય છે." ॥ એમ ।

વળી–ભાગવતમાં કહ્યુ છે–" આ જીવાત્માને ચિત્તજ ખરી રીતે બન્ધ અને મોક્ષને માટે માનેલું છે, ગુણમાં આસકત થાય તો બન્ધને માટે થાય અને પુરૂષમાં–પરમાત્મામાં આસકત થાય તો મુકિતને માટે થાય. " ॥ ૩–૨–૩ ॥

એજ બાબત સ્પષ્ટતાથી કહી બતાવે છે—

**જીવાત્માઓ તો વિકારવાળા નથી, વિકારો અન્તઃકરણના છે માટે. ॥૩-૨-૪॥**

भा-नन्वन्तःकरणप्रसङ्गकृतोऽयं जीवस्य संसारः कदा ? निवर्त्तेतेत्याशङ्क्य तदुत्तरयति-अनन्येति ।

**सू० अनन्यभक्त्या तद्बुद्धिलयादत्यन्तम् ॥ ३-२-५ ॥**

भगवज्जनप्रसङ्गेन जातया अनन्यभक्त्या-एकान्तभक्त्या, तस्मिन्-सर्वज्ञे सत्यसङ्कल्पेऽवाप्तसमस्तकामे सर्वेश्वरे श्रीपतौ श्रीकृष्णे। बुद्धिलयात्—अन्तःकरणलयात्—अन्तःकरणनिरोधात्। अत्यन्तम्-परमैकान्तिकसुखरूपं परमनिःश्रेयसं भवतीत्यर्थः ।

तदुक्तम्—श्रीमद्भागवते पञ्चमस्कन्धे—

"योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवे, अनन्यनिमित्तभक्तियोगलक्षणो, नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषप्रसङ्गः" ॥

बृहद्ब्रह्मसंहितायां चतुर्थपादे दशमेऽध्याये भद्रासनराजोवाच-

"कथं ? जीवोऽणुरूपोऽयं शरीरे सर्वगः प्रभो ! ।
कदास्य मायायोगोऽभूत् कदा मुक्तिर्भविष्यति" ॥

---

તુ-શબ્દ શંકા કરેલી બાબતનો વ્યાવર્તક-નિવૃત્તિ કરનારો છે. । આત્માઓ-જીવાત્માઓ વિકાર પામેલા અગર પામનારા નથી. અર્થાત્-સુખ, દુઃખ, મોહ, પ્રમાદ, વિગેરે દોષોથી વિકાર પામતા નથી. । કારણ કે-ખરી રીતે તે દોષો સઘળા અન્તઃકરણના વિકારરૂપ છે. ॥ ૩-૨-૪ ॥

નનુ-શંકા, અન્તઃકરણના પ્રસંગથી થયેલો આ જીવને સંસાર ક્યારે નિવૃત્તિ પામે-પામશે ? એમ આશંકા ઉઠાવીને તેનો ઉત્તર આપેછે—

**અનન્ય ભક્તિથી તે પરમેશ્વરમાં બુદ્ધિનો લય થવાથી આત્યન્તિકી મુક્તિ થાય. ॥ ૩-૨-૫ ॥**

ભગવદ્ભક્તોના પ્રસંગથી થયેલી અનન્ય-એકાન્તિકી ભક્તિથી, તે સર્વજ્ઞ, સત્યસંકલ્પ, સમસ્ત કામ-ઇચ્છાઓથી પૂર્ણસ્વરૂપ, સર્વેશ્વર અને શ્રીપતિ એવા શ્રીકૃષ્ણને વિષે બુદ્ધિનો-અન્તઃકરણનો લય થવાથી, એટલે કે-અંતઃકરણનો પરમાત્મસ્વરૂપમાં નિરોધ થવાથી, અત્યન્ત-પારમૈકાન્તિક સુખરૂપ પરમ કલ્યાણ થાયછે. એ અર્થ છે. । તે શ્રીમદ્ભાગવતમાં પંચમ સ્કંધમાં કહ્યું છે-"જ્યારે પ્રાણીઓને મહાપુરુષ-પરમેશ્વરના ભક્તોનો પ્રસંગ-સમાગમ થાય છે, ત્યારેજ સર્વ ભૂતના આત્મા-અન્તર્યામી, અનન્યાશ્રય, મન-વાણીને અગોચર અને સ્વયં સર્વાધાર હોવાથી અનન્યાધાર, એવા પરમાત્મા વાસુદેવ ભગવાનને વિષે નિષ્કામ ભક્તિયોગરૂપ અસાધારણ પ્રેમ થાયછે. અને તેજ અનેક જન્મ થવામાં નિમિત્તભૂત એવી અવિદ્યાની ગ્રન્થિઓના વિનાશદ્વારા મોક્ષ આપનારો થાયછે." ।

टी-अयमाशयः-अयं तु जीवः स्वतो ज्ञानैकघनः, परमात्मनः शरीरभूतश्च, अथ कथं प्रत्येति-देवोऽहं मनुष्योऽहं सुखी दुःखीति, न प्रत्येति च "ज्योतींषि विष्णुर्भुवनानि विष्णुरहं च विष्णु" रिति, तत्राहेति ॥

अत्र मनोग्रहणमुपलक्षकमित्यभिप्रेत्य व्याचष्टे-प्राणेति । अनादित्वादस्योपाधियोगो वा कथमिति न शङ्कावकाशः । अतत्त्वव्यवहार इति । तत्त्वदृष्टिमूलको व्यवहारस्तत्त्वव्यवहार उच्यते, स न भवतीत्यतत्त्वव्यवहारः । यस्मादेषामनादिकालागतकर्ममूलकमनःप्राणादिलक्षणगुणमयसंसर्गकृतविपरीतवासनाहितविपरीतदृष्टीनां न भवति-ज्ञानैकाकारस्वपरमात्मात्मकत्वदृष्टिप्रसरावकाशः । अत एव न भवति- "ज्योतींषि विष्णु"रित्यादिको व्यवहारः । किन्तु यथाविपरीतदर्शनं भवति विपरीत एव व्यवहारः-सुखी, दुःखी, देवोऽहं, मनुष्योऽहमिति । अतोऽयं व्यवहारोऽतात्त्विकः-उपाधिकृतो, न नैसर्गिक इति । अत्र प्रमाणान्युदाहरति-तदुक्तमिति । इदं सूत्रं कैश्चिन्न पठ्यते ॥ ३-२-३ ॥

ननु-कथं जीवात्मनां संसरणाभावः ? सर्वे एव हि सुखदुःखादयो विकारा जीवाश्रयाः । अविकृतस्वरूपेषु तु न विकारसम्भवः, तद्विकारयोगात्तेऽपि विकृता एव । घटशरावादीनामिव विकृतानां मृण्मयानां वैषम्यं स्वरूपे दुरपह्नवं, तथा च नैसर्गिकं संसरणमित्याशङ्कायां तत्परिहारमुखेनाविकृतत्वमसमर्थनात् संसरणस्यौपाधिकत्वं स्थिरीकृतं भवतीत्यभिप्रेत्याह एतदेवेति ॥

-ते हीति । अयम्भावः-यद्यपि भवत्यहं सुखी दुःखीत्यहमर्थसमानाधिकरणः सुखदुःखादिप्रत्ययः । अथाप्ययं प्रत्ययो नात्मस्वरूपविकारित्वानुबन्धी । सुखदुःखादेराश्रयतामात्रमनेन गम्यते, अन्यतः प्रभवानामन्याश्रयतामात्रमविरुद्धम् । सुखदुःखादयस्तु विकारा अन्तःकरणकार्या धर्मभूतज्ञानावस्थाविशेषाः । तदाश्रयतामात्रेण न स्वरूपविकारप्रसङ्ग इति ॥ ३-२-४ ॥

ननु-चेदनादिरस्य प्रकृतिसंसर्गः, कथमनादेरपगम स्यादित्याशयेनाशङ्कते-नन्विति ।

तस्मिन् बुद्धिलयादिति सप्तमीतत्पुरुषमभिप्रेत्य व्याचष्टे-तस्मिन्नित्यादि । लयश्चात्र-निरुद्धसकलेतरवृत्तिकं तदेकवृत्तिकतयावस्थानम् । न तु स्वकारणे लयलक्षणः । न हि प्रलयकालिकः, न चाहङ्कारे घटेत । तद्विकारत्वादहङ्कारस्येत्येतदङ्गमयन्नाह-अन्तःकरणनिरोधादिति । अत्र चानन्यभक्तिर्हेतुः ।

केचित्तु-लयमिमं योगाभ्यासेन सम्पादयितुम् प्रयतन्ते, अन्ततोऽनन्यभक्तिं विना स न लभ्यते, निष्पन्नायामनन्यभक्तौ सोऽयं लयः सम्पद्यते । ततश्च तत्साक्षात्कारेण " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"। प्रक्षीणसकलकर्मबन्धस्य, अत्यन्तम्-परम्, एकान्तिकं सुखं निःश्रेयसलक्षणं भवति ।

इदमत्र बोध्यम्-यद्यप्यनादिकालप्ररूढा विपरीतवासना, तन्मूलकश्च प्रकृतिसंसर्गः । सा चेद्दृष्टविधया तत्त्वचिन्तनाभ्यासबलेन निवर्त्यैति ब्रूमः, तदा स्यादियमाशङ्का अनादिकालप्रवृत्तः प्रकृतिसंसर्गः कथं नश्येदिति । अनन्यया भगवद्भक्त्या भगवति निश्चलयात्म भगवान् सर्वज्ञः सर्वशक्तः सत्यसङ्कल्पः परमकारुणिकः सपदि स्वयमेव स्वात्मानं यथावस्थितं साक्षात्कारयित्वा सकलकर्मग्रन्थिं समुन्मूलयतीति नेयं शङ्कास्मासु प्रसरेदिति । अनन्यया भक्त्यात्यन्तं तद्बुद्धिलयादित्यन्वयोऽत्र सुघटः ।

भा-श्रीहर उवाच–"स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः ।
एकदेशस्थितो वेत्ति हरिचन्दनबिन्दुवत् ॥
प्रभया भास्करो यद्वद्ब्रह्माण्डं व्याप्य तिष्ठति ।
एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते ॥
कदास्य मायायोगोऽभूदिति प्रश्नो न सौख्यदः ।
अनादिकालतो जीवो मायया परिवेष्टितः ॥
अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः ।
त्रिविधोऽनुग्रहो विष्णोः कर्म ज्ञानमुपासनम् ॥
मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः ।
हित्त्वा सङ्कुचितावस्थाभेदं प्रकृतिसम्भवम् ॥
सम्प्राप्तात्मस्वरूपोऽयं प्रेमातिशययोगतः ।
प्राप्नोति परमात्मानं यतो नावर्तते पुनः"इति ।
श्रीमद्भगवद्गीतायां च—
"पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यये"ति ॥३-२-५॥

બૃહદ્બ્રહ્મસંહિતામાં ચતુર્થ પાદમાં દશમા અધ્યાયમાં ભદ્રાસ્રરાજાએ પૂછ્યું છે–"હે પ્રભુ! આ અણુરૂપ જીવાત્મા શરીરમાં સર્વત્ર કેવી રીતે વ્યાપીને રહ્યો છે? આ જીવાત્માને માયાનો યોગ-સંબંધ ક્યારે થયો ? અને એની ક્યારે મુક્તિ થશે ?"।

શ્રીશંકર કહેછે–"સ્વરૂપે કરીને અણુરૂપ છે, તો પણ પ્રકાશે કરીને આખા શરીરમાં વ્યાપીને રહ્યો છે. અને એક દેશમાં રહ્યો થકો સઘળું જાણેછે, જેમ ચંદનનો બિન્દુ એક સ્થાનમાં હોવા છતાં સુગંધથી બધે પ્રસરે છે તેમ. । વળી–જેમ સૂર્યદેવ પોતાની પ્રભાથી આખા બ્રહ્માંડમાં વ્યાપીને રહેછે, વળી–દીવો જેમ એક સ્થાનમાં રહેલો હોય તો પણ સમગ્ર ગૃહમાં પ્રકાશ કરે છે, તેમ.। હવે–આ જીવને માયાનો યોગ ક્યારે થયો ? એમ પ્રશ્ન કરવો તેજ અસ્થાને–અયોગ્ય છે, કેમ કે–બીજાંકુર–ન્યાયે "જીવાત્મા અનાદિ કાળથીજ માયાથી પુરેપુરો વીંટાયેલો છે. પરંતુ–એક શ્રીહરિનાજ અનુગ્રહથી મુક્તિને પામેછે એમાં સંશય નથી. । અને ભગવાન વિષ્ણુનો અનુગ્રહ–કર્મ, જ્ઞાન અને ઉપાસન, એમ ત્રણ પ્રકારનો છે. । મુક્તિ એટલે–અન્યથા રૂપનો ત્યાગ કરીને સ્વસ્વરૂપથી સદાય વર્તવું તે, પ્રકૃતિના સંસર્ગથી થયેલો સંકુચિત અવસ્થાભેદ ત્યાગ કરીને સમ્યક્ પ્રકારે આત્મસ્વરૂપમાં સ્થિતિ–નિષ્ઠા પામેલો આ પુરૂષ ભગવત્સ્વરૂપમાં અતિશય પ્રેમયોગ થવાથી પરમાત્માને પામેછે, કે જેને પામ્યા પછી ત્યાંથી ફરી આ સંસૃતિમાં આવવાનું રહેતું નથી."॥

શ્રીમદ્ભગવદ્ગીતામાં પણ–"તે પર પુરૂષ પરમાત્મા તો હે પાર્થ ! અનન્ય–એકાન્તિકી ભક્તિથીજ મળેછે." આ પ્રમાણે કહેવામાં આવ્યું છે. ॥ ૩–૨–૫ ॥

भा–ननु–कथं? स्वतःसिद्धस्य परमात्मनः पुरुषार्थतेत्यत्राह–ग्रामेति ॥

सू० ग्रामादिवत्पुरुषार्थः ॥ ३–२–६ ॥

सिद्धोऽपि ग्रामादिः प्रयत्नप्राप्यः पुरुषार्थो यथा भवति, तथा अयमपि प्राप्यतया भवति पुरुषार्थः । सत्सङ्गलब्धश्रवणकीर्त्तनाद्य-भिरुचिभिः श्रवणकीर्त्तनाद्यङ्गभक्तिसेवनैरन्तर्यसमुद्भूतया अनन्य-भक्त्या प्राप्यते हि परमात्मा ॥ ३—२—६ ॥

नन्वनन्यभक्तानामपि केषांचिद्भगवत्प्राप्तिलक्षणो मोक्षः सपदि न लभ्यते इत्यत्राह–आयुरिति ॥

सू० आयुश्चिरमितरेषां तु हानिरनास्पदत्वात् ॥ ३-२-७ ॥

इतरेषाम्–हनुमत्प्रभृतीनाम्, अनन्यभक्तौ सत्यामपि आयु-

નનુ–શંકા, સ્વતઃસિદ્ધસ્વરૂપ પરમાત્માની પુરૂષાર્થતા કેમ? કહેવાય? એ આશંકાના સમાધાનમાં કહે છે—

ગ્રામાદિકની પેઠે એ પણ પુરૂષાર્થરૂપ છે. ॥ ૩–૨–૬ ॥

ગ્રામાદિક પદાર્થો સિદ્ધ છે, તો પણ પ્રયત્નથી પ્રાપ્ય હોઇને જેમ પુરૂષાર્થરૂપ થાયછે, તેજ પ્રમાણે આ પરમાત્મા પણ પ્રાપ્ય ૧ હોવાથી પુરૂષાર્થરૂપ થાયછે.। સત્સંગથી–સત્સમાગમથી પ્રાપ્ત થતાં શ્રવણકીર્તનાદિકમા અભિરૂચિવાળા પુરૂષોએ શ્રવણકીર્તનાદિક અંગરૂપ ભકિતના અવિચ્છિન્ન સેવનથી સમ્યક્ પ્રકારે ઉત્પન્ન થયેલી અનન્ય–ઐકાન્તિકી ભકિતથી નિશ્ચેજ પરમાત્મા પ્રાપ્ત કરાય છે–થાય છે. ॥ ૩–૨–૬ ॥

નનુ–શંકા, કેટલાક અનન્ય–ઐકાન્તિક ભકતોને પણ ભગવત્પ્રાપ્તિરૂપ મોક્ષ તુરત પ્રાપ્ત થતો નથી ( તેનું કેમ સમજવું ? ) એ આશંકાના સમાધાનમા કહે છે—

બીજાઓને તો આયુષ્ય દીર્ઘ છે, ( પણ ) દુઃખની હાનિ તો છેજ. વાસનાનું આસ્પદ નહિ હોવાથી. ॥ ૩–૨–૭ ॥

બીજાઓને–હનુમાનજી વિગેરે ભકતોને, અનન્ય ભકિત હોવા છતાં પણ તેમનું આયુષ્ય દીર્ઘ–ચિરકાળ સુધી લાંબુ હતું અને તે વરપ્રાપ્ત—ઇષ્ટદેવતાની પ્રસન્નતાથી

૧–પુરૂષે કરેલા પ્રયત્નથી સિદ્ધ થતો અર્થ એ પુરૂષાર્થ કહેવાય છે, જેમ યજ્ઞાદિક પુરૂષ-પ્રયત્ન કરવાથી સ્વર્ગાદિક અપૂર્વ ફળરૂપે પ્રાપ્ત થાય છે, તો તે પુરૂષાર્થ કહેવાય.। પરમાત્મા તો નિત્યસિદ્ધ હોવાથી કોઇ પ્રયત્નથી સાધ્ય નહિ હોવાથી તે પુરૂષાર્થરૂપ ન કહેવાય, માટે પરમાત્માની પુરૂષાર્થતા કેમ?–કેવી રીતે હોઇ શકે? એ અભિપ્રાય છે.।

૧–અભિપ્રાય એ છે કે—પરમાત્મા નિત્યસિદ્ધ છે. તો પણ "भक्त्या लभ्यस्त्वनन्यया", "परमाप्नोति पुरुषः" "ब्रह्मविदाप्नोति परम्" "परात्परं पुरुषमुपैति" એ આદિક શ્રુતિ સ્મૃતિઓએ કહેવા પ્રમાણે પ્રાપ્યરૂપ હોવાથી એ પુરૂષાર્થરૂપ થાય છેજ. વળી–ગત્ર પૂર્ણ અને નિત્ય સિદ્ધ વસ્તુ પરમાત્માછે, તો પણ દિવ્ય બ્રહ્મપુર નામે પ્રસિદ્ધ નિજધામમાં પુરુષાર્થરૂપે પ્રાપ્ય હોવાથી પણ પુરૂષાર્થતા છેજ. આ બાબતનો વિશેષ ખુલાસો સમ્પ્રદાયના તત્ત્વજ્ઞ પાસેથી જાણી લેવો એ વધારે ઇષ્ટ છે. કેમ કે— "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" એમ ભગવાન પોતેજ જાહેર કરે છે માટે.।

री-अत्यन्तमित्यनेन स्वतो व्युत्थितिगाहिरयं व्यज्यते। तद्बुद्धिलयादित्यस्य, तस्य-अनन्यभक्तस्य बुद्धेर्लयादित्यप्यर्थः कर्तुं शक्यते। तदा च परमात्मन्यनन्यभक्तेः साधनस्य कथनादेव परमात्मनि लय इत्यर्थसिद्धं भवति। सर्वेषाण्याशयस्तु स एव। उक्तार्थे प्रमाणमाह-तदुक्तमिति ॥ ३-२-५ ॥

ननिवति। अयमाशयः--कोऽस्य पुरुषार्थः?। प्रयोजनं हि पुरुषार्थः। प्रयोजनं तु प्रयत्नसाध्यम्, यत्तु सिद्धं न तत्प्रयत्नेन सत्तां लभते, प्रागेव सत्त्वात्। स्वर्गादिशब्दवाच्यमपूर्वं सुखं यागनिष्पाद्यमिति प्रयोजनपदमाप्नोति। न तथा परमात्मा। यच्चात्मनः स्वरूपं तदपि सिद्धमिति न साध्यम्। न च तस्य स्वात्ममलापनयनं पुरुषार्थो भवितुमर्हति। स्वत एव तस्यापहतपाप्मत्वादिभावात्। न चास्य कर्मकृतज्ञानसङ्कोचमूलकागन्तुकसुखदुःखादिवासनापनयनं पुरुषार्थः। सत्यं पुरुषार्थो नामायं जरामरणमोक्षाय भजमानानाम्। यस्त्वनन्यप्रयोजनो भगवदेकप्रियस्तस्य स कथं पुरुषार्थो भवितुमर्हति?। प्राधान्येनाकाङ्क्षितत्वात्। तदस्य पुरुषार्थो दुर्निरूप इति।

सिद्धोऽपीति। अयम्भावः-प्रयोजनत्वे प्रयत्नसाध्यत्वमप्रयोजकम्। आनन्दमयत्वमेव तु तथा। प्रपञ्चितं चैतत्समन्वयाधिकरणे शारीरकमीमांसायां भगवता भाष्यकृता। सिद्धस्यापि स्वापेक्षया विप्रकृष्टत्वेनालब्धतया भवति तल्लिप्सा, यथा ग्रामादौ। तद्युक्ता प्राप्यतया पुरुषार्थतेति। देशविशेषविशिष्टवेषेण च प्राप्यतेति सर्वतः सर्वदा सन्निहितस्य ग्रामस्येव विप्रकृष्टता प्रयत्नेन प्राप्तिश्चेति कथमिति शङ्कापास्ता। अधिकमन्यत्र ॥ ३-२-६ ॥

वरलब्धमिति। सति समग्रकारणसमवधाने कार्यस्य विलम्बो हि न घटेत। ये त्वनन्यभक्तास्तेषां किं भगवत्प्राप्तिलक्षणमोक्षे सामग्रीवैकल्यम्। परिपूर्णा ह्येषामनन्यभक्तिः। वरप्रसादत्तश्चिरजीवित्वमित्यनुत्तरम्। न हि सामग्रीविघटकम् तत्। प्रतिबन्धकविधया तु कर्मणां तथात्वं दृष्टम्। सत्यम्—अनन्यभक्ता नामैते। अनवधिकातिशया चैषामनन्यभक्तिः। तथापि प्रतिबन्धकानपायात्तु सामग्रीवैकल्यम्। वरप्रसादोऽपि प्रतिबन्धककोटौ भवितुमर्हति। प्रारब्धं हि कर्म पुण्यपापलक्षणम्। तपश्चर्यासन्तुष्टवरलाभोऽपि पुण्यकोटौ प्रविशन् प्रारब्धेऽन्तर्भवति। आधिकारिकपुरुषन्यायात्। सत्यामप्यनन्यभक्तौ प्रारब्धस्य भोगैकनाश्यतया न सपदि भगवत्प्राप्तिलक्षणो मोक्ष इति भावः। अयमेव न्यायोऽन्यत्रापि बोध्यः। स्वतस्तु ते मुक्ता एवेति। उपचर्यते पुनर्भवबीजाभावात्।

यद्वा-देशविशेषविशिष्टभगवत्प्राप्तिलक्षणमुख्यमोक्षाभावेऽपि तापत्रयाभिभवाभावेन भगवदनन्यप्रेमातिशयकृतानवरततदनुभवलक्षणमहानन्दरससागरनिमग्नतया मुक्ता उच्यन्ते ॥

"आयुश्चिरमितरेषां तु हानेरनास्पदत्वात्" इति पाठे त्वयमर्थः-अनन्यभक्तानामप्यनन्यभक्तपुरुषस्य तुक्षणं न प्रकृतिविश्लेषपूर्वकभगवत्प्राप्तिः, किन्तु-यावदायुः-जीवनादृष्टम्-प्रारब्धम्, तावच्चिरम्-विलम्बः। "तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति श्रुतेः। तत्र हेतुमाह-इतरेषामिति। इतरेषाम्-प्रारब्धादितरेषाम्, हानेरनास्पदत्वात्-तत्र पूर्वेषां भक्तिबलेन नाशात्, उत्तरेषां च ग्रामादिकानामनास्पदत्वादश्लेषादिति ॥ ३-२-७॥

कारणत्वसिद्धेरिति। अयम्भावः-एतावता प्रबन्धेन भक्तेरेव मोक्षसाधनत्वं स्थिरीकृतम्। अतश्च सत्यां भक्तौ संसृत्यपगमः, असत्यां चानपगम इत्यन्वयव्यतिरेकौ सिद्धौ॥ अत्रायं व्यतिरेकसहचारः संसृतावभक्तेः प्रयोजकतायां पर्यवस्यति। तदभक्तेरेव संसृतिसम्भव इति व्यक्तं नामेति भावः। अन्यथासिद्धत्वादिति।

भां--श्रिरम्-वरलब्धम्-देवताप्रसादकृतम्, अथापि ते मुक्ता एव। सशरीराणामपि तेषां हानिः--तापत्रयस्य हानिर्भवत्येव। अनास्पदत्त्वात्-आस्पदस्य—वासनालक्षणदुःखबीजस्य, अभावात्॥ ३—२—७॥

ननु-जीवानां संसृतिकारणमभक्तिरज्ञानं वेत्याशङ्कायामाह-संसृतिरिति

सू० संसृतिरेषामभक्तेः स्यान्नाज्ञानात् कारणत्वसिद्धेः॥३-२-८॥

एषां—जीवानाम्, संसृतिः—संसारः, अभक्तेः—स्नेहपूर्वकभगवद्भजनाभावात्। नाज्ञानात्। कुतः? अभक्तेरेव कारणत्त्वसिद्धेः। अज्ञानस्य संसृतिं प्रत्यन्यथासिद्धत्त्वात्। यत्र भक्त्यभावस्तत्र ज्ञानाभावोऽपि स्वत एव वर्त्तत इत्यर्थः। तदुक्तम्—

"जन्मानि घोरयमकिङ्करताडनानि
दैन्यानि तानि यमकिङ्करदर्शनानि।
जन्तोरहंममतरङ्गकुरङ्गतृष्णा-
कृष्णाङ्घ्रिपङ्कजपराङ्मुखतानुभाव" इति॥३-२-८॥

---

થયેલું હતું, તો પણ તે બધા મુક્તોજ છે.। અને શરીરે સહિત વર્તે છે તો પણ તેમને તાપત્રયની હાનિ તો છેજ.। કારણ કે—આસ્પદનો-વાસનાલક્ષણ દુઃખબીજનો અભાવ છે માટે.॥ ૩–૨–૭॥

નનુ-શંકા, જીવાત્માઓને સંસૃતિનું કારણ અભક્તિ છે? કે—અજ્ઞાન છે? એ આશંકાના સમાધાનમાં કહેછે-

***આ જીવાત્માઓને સંસૃતિ અભક્તિથીજ છે, પણ અજ્ઞાનથી નથી, ( અભક્તિનીજ ) કારણતા સિદ્ધ થાય છે માટે.*** ॥ ૩–૨–૮॥

આ જીવાત્માઓને સંસૃતિ-સંસાર તો અભક્તિથીજ—સ્નેહપૂર્વક ભગવદ્ભજનના અભાવથીજ છે, પણ અજ્ઞાનથી નથી.। શાથી એમ? તો કે-સંસૃતિમાં અભક્તિનીજ કારણતા સિદ્ધ થાય છે માટે.। અને અજ્ઞાનનું તો સંસૃતિ પ્રત્યે અન્યથાસિદ્ધપણું છે માટે. એનો અર્થ એ છે કે-જ્યાં ભક્તિનો અભાવ છે ત્યાં જ્ઞાનનો પણ અભાવ આપો-આપજ વર્તે છે.। તે વિષે કહ્યું છે-" શ્વાનસૂકરાદિક હીન યોનિમાં અવતરવું, ભયંકર યમકિંકરોનાં તાડન ખમવાં, જ્યાં ત્યાં અતિ દીનતા કરવી, યમદૂતોનું દેખાવું, અહંતા-મમતારૂપી મિથ્યા તરંગોમાં કુરંગની માફક અતિ તૃષ્ણા રાખવી, આ બધું કષ્ટ પ્રાણીઓને થાય છે, તે શ્રીકૃષ્ણ પરમાત્માના પાદપદ્મથી પરાઙ્મુખ-વિમુખભાવે વર્તવાનોજ પ્રભાવ છે." એમ જાણવું.॥ ૩–૨–૮॥

भा-प्रमेयसिद्धेः प्रमाणाधीनतया प्रमाणव्यवस्थामाह-त्रीण्येवेति ।

**सू० त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदाद्रुद्रवत् ॥ ३-२-९ ॥**

एषाम्—जीवानाम्, त्रीणि नेत्राणि-ज्ञानकरणानि-प्रमाणानीत्यर्थः । तान्येवाह-शब्दलिङ्गाक्षभेदात् । शब्दो—वेदादिः, लिङ्गम्-अनुमानम्, अक्षम्—प्रत्यक्षम्, इति भेदात् । शब्दानुमानप्रत्यक्षाणीत्यर्थः । रुद्रवत्-रुद्रो यथा नेत्रत्रयेण पश्यति, तथा सर्वे जीवा एतत्प्रमाणत्रयेण हिताहितमवलोकयन्तीत्यर्थः ॥ ३—२—९ ॥

नन्वेषां जीवानां जन्ममरणादिविकाराः कस्माद्भवन्तीत्याकाङ्क्षायामाह-आविर्भाव इति ॥

**सू० आविर्भावतिरोभावविकाराः स्युः क्रियाफलसंयोगात्॥३-२-१०॥**

इति श्रीभक्तिमीमांसाशास्त्रस्य श्रीशाण्डिल्यमुनिप्रणीतस्य भक्तिसूत्रस्य तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ ३-२ ॥

आविर्भावो—जननम्, तिरोभावो—मरणम्, विकारास्तु अस्ति, जायते, वर्धते, विपरिणमते, क्षीयते, नश्यतीति । पुष्टिकार्श्य-

---

હવે-પ્રમેયસિદ્ધિ પ્રમાણને આધીન હોવાથી પ્રમાણની વ્યવસ્થા કહે છે—

**આ લોકોને ત્રણ નેત્ર ( પ્રમાણ ) છે. શબ્દ, લિંગ ( અનુમાન ) અને પ્રત્યક્ષ એવા ભેદથી. રૂદ્રની પેઠે. ॥ ૩—૨—૯ ॥**

આ જીવાત્માઓને ત્રણ નેત્રો-જ્ઞાનનાં સાધનભૂત પ્રમાણો છે. । તેનેજ કહી બતાવે છે-શબ્દ, લિંગ અને અક્ષ, એવા ત્રણ વિભાગથી છે. । તેમાં શબ્દ-વેદાદિક છે, લિંગ-અનુમાન અને અક્ષ-પ્રત્યક્ષ પ્રમાણ, એવા ભેદથી છે, એટલે કે-શબ્દ, અનુમાન અને પ્રત્યક્ષ, એમ ત્રણ પ્રમાણ છે. । રૂદ્રની પેઠે-રૂદ્ર જેમ ત્રણ નેત્રોથી જુએછે, તેમ સર્વ જીવાત્માંઓ આ ત્રણ પ્રમાણોથી હિત-અહિતને જોઇ-સમજી શકેછે, એ અર્થ છે. ॥ ૩-૨-૯ ॥

નનુ—શંકા, આ જીવાત્માઓને જન્મમરણાદિક વિકારો શાથી ?-શા કારણથી થાય છે ? એ જાણવાની આકાંક્ષામાં કહેછે—

**આવિર્ભાવ, તિરોભાવ, વિગેરે વિકારો ક્રિયાના ફળસંયોગથી થાય છે. ॥ ૩—૨—૧૦ ॥**

**ઇતિ શ્રી ભકિતમીમાંસાશાસ્ત્રરૂપ શ્રીશાણ્ડિલ્યમુનિપ્રણીત ભકિતસૂત્રના તૃતીયાધ્યાયનું દ્વિતીય આહ્નિક સમ્પૂર્ણ થયું. ॥ ૩-૨ ॥**

આવિર્ભાવ-જનન, તિરોભાવ-મરણ અને વિકારો તો-છે, ઉત્પન્ન થાયછે, વધેછે, વવિધરૂપે પરિણામ પામેછે, ક્ષય પામેછે અને નાશ પામેછે, એ પ્રમાણે છે. । અથવા તો-પુષ્ટિ, કૃશતા, વૃદ્ધિ, હાનિ, એ વિગેરે જાણવા. । આ બધા વિકારો ક્રિયા-શુભાશુભ કર્મ, તેમનું જે ફળ, તેના સંયોગથી-સબંધથી, થાયછે એમ જાણવું. ॥

भा-वृद्धिहान्यादयो वा। एते क्रियाफलसंयोगात्-क्रियाः-शुभाशुभकर्माणि, तेषां यत्फलं, तस्य संयोगात्-सम्बन्धात्, स्युः-भवन्तीति॥

वस्तुतस्त्वेक एवासौ श्रीकृष्णो निखिलाश्रयः।
विभर्त्ति बहुरूपाणि विश्वोत्पत्त्यादिहेतवे॥
यत्सम्पर्काद्भवन्त्येव सुखिनः सर्वजन्तवः।
अन्तर्यामितया तेषु स्थित्वासौ फलदोऽभवत्॥
यदैषां त्रिगुणैः क्षिप्तं मनस्तं न भजेत्तदा।
तत्कृतः सर्वजीवानां संसारोऽस्ति न वस्तुतः॥
अनन्यभक्त्या चैतस्मिन् श्रीकृष्णे सत्प्रसङ्गतः।
चेतसो विलयात्तेषां श्रेय आत्यन्तिकं भवेत्॥
केषाञ्चिल्लोमशादीनां चिरायुष्ट्वं वरादितः।
सदेहत्वेऽपि नो दुःखप्रसङ्गस्तदनुग्रहात्॥

( ભાષ્યકર્તા નિત્યાનન્દમહામુનિ ગ્રન્થના અન્તિમ ભાગમાં આખા ગ્રન્થનો રહસ્યાર્થ સંક્ષેપમાં જણાવીને અને વળી–આ ભાષ્યગ્રન્થ પોતાના ઇષ્ટદેવ શ્રીહરિના પારમૈકાન્તિક સત્પુરૂષોની પ્રસન્નતા માટેજ તત્ત્વાર્થ જાણવા સારૂ રચ્યો છે, એમ કહીને તે ગ્રન્થ પોતાના ઇષ્ટ પ્રભુ નિરવધિકાનન્દમય પ્રત્યક્ષ શ્રીહરિ શ્રીસહજાનંદસ્વામીના પાદપદ્મમાં સમર્પણ કરીને ગ્રન્થની સમાપ્તિ જણાવે છે– )

આ પ્રબન્ધમાં પ્રતિપાદન કરેલા સકળ વિશ્વના પરમ આધારભૂત શ્રીકૃષ્ણ પરમાત્મા વસ્તુસ્વરૂપે તો એકજ–અદ્વિતીયસ્વરૂપ છે. અને તેજ પરમાત્મા વિશ્વની ઉત્પત્તિ આદિક ક્રિયાઓ કરવા માટે બ્રહ્માદિક બહુ રૂપને ધારણ કરેછે.। જેના સમ્બન્ધમાત્રથીજ સર્વ પ્રાણીઓ સુખીઆ થાયછે. અને એ પરમાત્માજ તે સર્વે પ્રાણીઓમાં અન્તર્યામિપણે રહીને તે તે કર્મનાં ફળ આપનારા થાયછે.। પરંતુ–જ્યારે એ જીવાત્માઓનું મન રજોગુણાદિક ત્રણ ગુણના કાર્યથી વિક્ષિપ્ત હોઇને તે પરમાત્માને ભજે નહિ–ભજતું નથી, તેથીજ સર્વ જીવાત્માઓને સંસાર વળગેલો છે, પણ વસ્તુતાએ[1] સંસાર નથી.। અને સત્પુરૂષોના પ્રસંગથી એ શ્રીકૃષ્ણ પરમાત્માને વિષે અનન્ય–પરમ એકાન્તિકી ભક્તિથી ચિત્તનો વિલય થવાથી તે જીવાત્માઓનું આત્યન્તિક—પરમ શ્રેય થાયછે.। વળી–કેટલાક લોમશાદિક મુનિઓને વર આદિકની પ્રાપ્તિથી ચિર આયુષ્યવાળાપણું જણાય છે, પરંતુ–તે પરમાત્માના અનુગ્રહથી સદેહપણામાં પણ દુઃખનો પ્રસંગ નથી હોતો.। માટે શ્રીકૃષ્ણ પરમાત્માના ચરણકમળથી વિમુખ પ્રાણીઓને તો કામાદિક

१. સ્વાભાવિક સંસાર નથી, પણ ગુણત્રયના સંબંધથી ભગવદ્‌ભક્તિના અભાવને લીધેજ છે, એ અભિપ્રાય છે.।

टी यद्यपि भक्त्यभावे न तत्त्वतो ज्ञानोदयोऽपि, "भक्त्या मामभिजानाती"ति स्मरणात्। तद्भक्त्यभावे ज्ञानाभावोऽस्त्येव, सत्युत्यपेक्षया नियतपूर्ववृत्तित्वमस्त्येव। अथापि तत एव स्मरणात् प्रदर्शितान्वयव्यतिरेकसहचारबलाधीनं मोक्षकारणत्वं भक्तावेव क्लृप्तमिति तदभावस्यवावदयक्लृप्तनियतपूर्ववृत्तितया अज्ञानमन्यथासिद्धमिति भाव ॥ ३-२-८ ॥

सूत्रे-शब्दलिङ्गाक्षभेदादिति। वेदस्य स्वत प्रमाणस्य धर्माधर्माद्यतीन्द्रियार्थ प्रमापकप्रमाणान्तरत श्रैष्ठ्यमभिप्रेत्य प्रथमतो निर्देश। लिङ्गस्य श्रुत्यर्थानुग्राहक-कोटावुपयोगसम्भवादनुपद निर्देश। प्रत्यक्षस्य तु लौकिकार्थमात्रपर्याप्तस्य पश्चान्निर्देश। उपमानादीनामनुमानेऽन्तर्भाव इति न प्रमाणाधिक्यम्। अधिकमन्यत्र। ३ २ ९॥

शुभाशुभकर्माणि तेषा यत्फल तस्य सयोगादिति। यद्यपि जननादिकमेव शुभाशुभकर्मफलम् अथापि शुभाशुभाना कर्मणा यागादिलक्षण यत्फलं जन्य पुण्यपापादि तत्संयोगादित्यर्थो वोध्य।

अत्रान्यै सत्कार्यवादसमर्थनपरतया व्याख्यात तदप्यविरुद्धम् सरसगतिकञ्च। अयञ्च तदाशय —

" नापूर्वं जायते किञ्चिन्न चात्यन्त प्रणश्यति।
सदेव चाविर्भवति तिरोभवति चापरम् ॥
नासतो विद्यते भावो नाभावो विद्यते सत ।
नैको विकार एकस्मिन् सदा सन्निहिता अपि ॥
एकाभिव्यक्तियोगेन भवन्त्यन्ये तिरोहिता ।
मृदि पिण्डविकारेण सदेव तु तिरोहितम् ॥
कारकस्य क्रियायोगाद्व्यज्यते तु घटादिकम् ।
इत्थ सत्कार्यवादोऽय कापिलैरुपकल्पित ।
पक्षमेन महर्षिश्च प्रकाशयति सुस्थितम् ' इति ॥

कृष्णजीवनदासेन भक्तितत्त्वप्रकाशिका ।
रचितेय शुभा टीका विबुधाह्लादकारिणी ॥
धर्मार्थकाममोक्षाणा चतुर्णां सिद्धिदायके ।
भगवत्सहजानन्दपादाब्जे सा समर्प्यते ॥
न लोके पाण्डित्य प्रकटयितुमेतद्विरचितम्
न वा मातुं श्लाघा निधिमिव बुधेभ्यस्त्वसुलभाम् ।
न वा तास्तान् गूढान् विशदयितुमर्थान् रसवत
परन्तु श्रीकृष्णप्रणयबहुमानाद्विरचितम् ॥
स तु सर्वसुहृत् श्रीमानुदार प्रणयप्रिय
तुष्यत्वनेन सर्वात्मा भगवान् भक्तिनन्दन ॥ ३-२-१० ॥

इति श्रीपरमसद्गुरु श्रीनित्यानन्दमुनिशिष्य—कृष्णजीवनदासमुनिविरचितायां शाण्डिल्यसूत्रभाष्यटीकायां भक्तितत्त्वप्रकाशिकायां तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ ३-२ ॥

समाप्तस्तृतीयोऽध्यायः ॥ ३ ॥

॥ समाप्तं भक्तिशास्त्रम् ॥

આનાર શત્રુઓનો ચોતરફથી સમુદ્ભવ-ઉપદ્રવ થવાથી ભગવદ્ભક્તિના અભાવથીજ શંસાર વર્તે છે. । આ પ્રમાણે તાત્ત્વિક દૃષ્ટિએ વસ્તુસ્થિતિ હોવાથી બુદ્ધિમાન જનોએ પોતાના મનથી ભક્ત અને અભક્તની ગતિ શાસ્ત્રપ્રમાણથી જાણીને, કૃષ્ણને ભજનારાઓને જન્મમૃત્યુ અને જરા આદિક ક્લેશ છેજ નહિ એમ જાણવું ।

( ભાષ્યકર્તા નિત્યાનન્દમહામુનિ ભગવદ્ભક્ત મુનિઓની પ્રસન્નતા ઇચ્છે છે- )

ભક્તિનન્દન-એવા ભગવાન શ્રીહરિના ચરણકમળની નિરંતર સેવા કરવાથી જેમનાં સર્વ ઇન્દ્રિયો આનંદી વર્તે છે અને તેથીજ સર્વથા શાન્ત સ્વભાવે વર્તનારા, એવા જે ભગવદ્ભક્ત મુનિપુરૂષો તેમની પ્રસન્નતા સમ્પાદન કરવા માટે મેં-નિત્યાનન્દમુનિએ આ શાણ્ડિલ્યસૂત્રની વિવૃતિ ( ભાષ્ય ) નિશ્ચેજ તત્ત્વજ્ઞાનને માટે રચી છે. ।

મેં નિત્યાનન્દમુનિએ રચેલું આ ભક્તિતત્ત્વને પ્રકાશ કરનારૂં શ્રીશાણ્ડિલ્યસૂત્રનું ભાષ્ય ભગવાન શ્રીસહજાનન્દસ્વામીના પાદપંકજમાં સમર્પણ કરવામાં આવેછે. ।

જે ભગવાન શ્રીસહજાનન્દસ્વામીને જોવામાત્રમાંજ હૃદયની સર્વ ગ્રન્થિઓ ભેદાઇ જાય છે, સર્વ સંશયો પણ છેદાઇ જાય છે અને સઘળું કર્મજાળ પણ આપોઆપજ ક્ષય પામી જાય છે, આ અનન્ત વિશ્વની સર્ગાદિક ક્રિયાઓ જેના સંકલ્પમાત્રથીજ થાયછે. અને ક્ષર અને અક્ષર એ બન્ને સમૂહ થકી જે પોતે અત્યન્ત પર-ભિન્ન, વિલક્ષણ અને શ્રેષ્ઠ છે, એવા તે આ પ્રત્યક્ષ ધર્મદેવના પુત્રરૂપે શરીર ધારણ કરીને વર્તતા, સર્વના સાક્ષીભૂત અને અમારા સર્વના પરમ સુહૃદ્ એવા શ્રીમાન્ શ્રીસહજાનન્દસ્વામી ભગવાન સમ્યક્ પ્રકારે જયકારી વર્તે છે. ॥ ૩-૨-૧૦ ॥

ઇતિ શ્રી પરભક્તિસમારાધ્યભગવત્સહજાનન્દપરમાનુગ્રહપાત્રભૂત—
સકળવિદ્વજ્જનસાધુજનપૂજીત-સદ્ગુરૂવર્ય શ્રીનિત્યાનન્દમુનિ-
વિરચિતે શ્રી શાણ્ડિલ્યસૂત્રભાષ્યે તૃતીયાધ્યાયસ્ય
દ્વિતીયમાહ્નિકમ્ સમાપ્તમ્ ॥ ૩-

સમાપ્તશ્ચાયં તૃતીયોઽધ્યાયઃ ॥

આન્તર શત્રુઓનો ચોતરફથી સમુદ્ભવ-ઉપદ્રવ થવાથી ભગવદ્ભક્તિના અભાવથીજ સંસાર વર્તે છે. । આ પ્રમાણે તાત્ત્વિક દૃષ્ટિએ વસ્તુસ્થિતિ હોવાથી બુદ્ધિમાન જનોએ પોતાના મનથી ભક્ત અને અભક્તની ગતિ શાસ્ત્રપ્રમાણથી જાણીને, કૃષ્ણને ભજનારાઓને જન્મમૃત્યુ તેને જરા આદિક ક્લેશ છેજ નહિ એમ જાણવું. ।

( ભાષ્યકર્તા નિત્યાનન્દમહામુનિ ભગવદ્ભક્ત મુનિઓની પ્રસન્નતા ઇચ્છે છે– )

ભક્તિનન્દન-એવા ભગવાન શ્રીહરિના ચરણકમળની નિરંતર સેવા કરવાથી જેમનાં સર્વ ઇન્દ્રિયો આનંદી વર્તે છે અને તેથીજ સર્વથા શાન્ત સ્વભાવે વર્તનારા, એવા જે ભગવદ્ભક્ત મુનિપુરૂષો તેમની પ્રસન્નતા સમ્પાદન કરવા માટે મેં-નિત્યાનન્દમુનિએ આ શાણ્ડિલ્યસૂત્રની વિવૃતિ ( ભાષ્ય ) નિશ્રેયસ તત્ત્વજ્ઞાનને માટે રચી છે. ।

મેં નિત્યાનન્દમુનિએ રચેલું આ ભક્તિતત્ત્વને પ્રકાશ કરનારૂં શ્રીશાણ્ડિલ્યસૂત્રનું ભાષ્ય ભગવાન શ્રીસહજાનન્દસ્વામીના પાદપંકજમાં સમર્પણ કરવામાં આવેછે. ।

જે ભગવાન શ્રીસહજાનન્દસ્વામીને જોવામાત્રમાંજ હૃદયની સર્વ ગ્રન્થિઓ ભેદાઇ જાય છે, સર્વ સંશયો પણ છેદાઇ જાય છે અને સઘળું કર્મજાળ પણ આપોઆપજ ક્ષય પામી જાયછે, આ અનન્ત વિશ્વની સર્ગાદિક ક્રિયાઓ જેના સંકલ્પમાત્રથીજ થાયછે. અને ક્ષર અને અક્ષર એ બન્ને સમૂહ થકી જે પોતે અત્યન્ત પર-ભિન્ન, વિલક્ષણ અને શ્રેષ્ઠ છે, એવા તે આ પ્રત્યક્ષ ધર્મદેવના પુત્રરૂપે શરીર ધારણ કરીને વર્તતા, સર્વના સાક્ષીભૂત અને અમારા સર્વના પરમ સુહૃદ્ એવા **શ્રીમાન્ શ્રીસહજાનન્દસ્વામી** ભગવાન સમ્યક્ પ્રકારે જયકારી વર્તે છે. ॥ ૩–૨–૧૦ ॥

ઇતિ શ્રી પરભક્તિસમારાધ્યભગવત્સહજાનન્દપરમાનુગ્રહપાત્રભૂત—
સકળવિદ્વજ્જનસાધુજનપૂજિત-સદ્ગુરુવર્ય શ્રીનિત્યાનન્દમુનિ-
વિરચિતે શ્રી શાણ્ડિલ્યસૂત્રભાષ્યે તૃતીયાધ્યાયસ્ય
દ્વિતીયમાહ્નિકમ્ સમાપ્તમ્ ॥ ૩–૨ ॥

સમાપ્તસ્તૃતીયોઽધ્યાય ॥ ૩ ॥

